Bill No. 3/07-08

100 ✓

2008-0256 (Part 1)
" -0257 (Part 2)



1268
1269

Japanese customers make a long line to while waiting to enter a newly opened Louis Vuitton's shop in Tokyo on Sunday. Louis Vuitton opened its world's largest shop at Tokyo's Omotesando fashion street.

अष्टांगहृदयम् (चिकित्सितस्थानम्) of वाग्भट with the commentaries सर्वाङ्गसुन्दरी of अरुणदत्त and शशिलेखा of इन्दु - Edited by K. Achyuta Poduval and C.K. Raman Nambiyar - in 2 parts (Sri Ravi Varma Sanskrit Series No. 9), Tripunithura, 1960-64.

90

Sri Ravi Varma Sanskrit Series No. 9

SRI VAGBHATAVIRACHITHAM

# ASHTANGAHRIDAYAM

## (CHIKITSITASTHANAM)

WITH

The Commentaries

**SARVANGASUNDARI**

&

**SASILEKHA**

*Editor:*

**SRI K. ACHYUTHA PODUVAL**

RETIRED PROFESSOR OF NYAYA

WARIYAM ROAD, ERNAKULAM

*Sub Editor:*

**SRI C. K. RAMAN NAMBIAR**

RETIRED PRINCIPAL,

SANSKRIT COLLEGE, TRIPUNITHURA,

*Publishers:*

**THE SANSKRIT COLLEGE COMMITTEE**

**TRIPUNITHURA.**

**1960**









श्रीरविवर्मसंस्कृतग्रन्थावली

श्रीवाग्भटविरचितं

# अष्टाङ्गहृदयम् ।

## (चिकित्सितस्थानम्)

सर्वाङ्गसुन्दरी-शशिलेखाख्यव्याख्याद्वयसमन्वितम्

सम्पादकः

पण्डितराजः श्री. के. अच्युतप्पोतुवाळ्

उपसम्पादकः

पण्डितराजः श्री. सी. के. रामन् नम्प्यार्

१९६०

पूर्णत्रयीपुरस्थसंस्कृतकलाशालानिर्वाहकसमित्या प्रकाशिता

श्रीपूर्णत्रयीपुरस्थ'राज'मुद्रणालये मुद्रितम् ।

# PREFACE

Ashtangahridayam of Vagbhata occupies a prominent place among the works dealing with Ayurveda. In Kerala, where Ayurveda treatment is still popular in spite of unequal competition with modern systems, this work is studied more than Charaka and Susruta. A good knowledge of Sanskrit and practical experience as a Vaidya are both essential for a correct understanding of such a highly technical work. The late Panditaraja Uzhutra Warrier who was the Palace Physician of the Cochin Royal Family and sometime Professor of Ayurveda in the Sanskrit College, Tripunithura, was a first rate scholar and physician. His labours of nearly thirty years in collecting and examining manuscripts of Sarvanga Sundari and Sasilekha—two commentaries on Ashtangahridayam—resulted in the preparation of a corrected and authentic version of the text and commentaries for the Chikitsitasthanam which is the most useful part of the text from a physician's point of view. He entrusted the valuable script that he had prepared to his nephew and disciple, Sri. T. Achutha Warrier, B. A. L. T. who placed it at the disposal of the Sanskrit College Committee for being published in the Ravivarma Samskrita Granthavali. The publication was taken up when Sri. Achutha Warrier was the Principal and Professor of Ayurveda in the Sanskrit College and the first part of the work is now released. The Committee is thankful to him for placing the script at its disposal and himself reading the proof.

The text of Ashtangahridaya with Sarvangasundari of Arunadatta was first published in the Nirnayasagara

Press, Bombay, and later on at Benares. This edition of ours embodies the corrections made by the scholar-physician, the late Uzhutra Warrier in the course of teaching the work several times. The commentary Sasilekha written by Indu who is supposed to be a direct disciple of Vagbhata, is now published for the first time and is a valuable addition to the existing ones. A comparative study of the two commentaries would show that Arunadatta must have been a great scholar while Indu, a good physician. There are instances where the two differ, and in such cases, the interpretation of Indu appears to be more logical and acceptable to practicing physicians. Commenting on the verse "दध्युत्तरेण वा दद्यात् ततोऽस्मै वमनं मृदु" (ch 4, verse 4) Arunadatta says- 'दध्युत्तरेण दधिसरेण वमनं मृदु दद्यात् ।'. Indu gives an entirely different interpretation by connecting 'दध्युत्तरेण' with the previous line — 'दध्युत्तरेण वा अन्नं भोजयेदिति संबन्धः ।'. In verses 14 and 15 of chapter V, Sarvangasundari gives four yogas while Sasilekha gives only two. Panditaraja T. Achutha Warrier who has done some research in the field of Ayurveda says that the interpretation of Indu is correct.

Ayurveda is one of the branches of Sanskrit studies which affords ample scope for comparative study and research. This edition of ours with the hitherto unpublished commentary of Indu we hope, will be useful not only for a correct understanding of the text but also for conducting research in Ayurvedic medicines and treatment.

T. K. Ramachandra Aiyar,
Principal and Secretary
to the Sanskrit College Committee.

Tripunithura,
17—10—1960.

श्रीमद्वाग्भटविरचितम्

# अष्टाङ्गहृदयम् ।

## चिकित्सितस्थानम् ।

सर्वाङ्गसुन्दर्याख्यव्याख्यया श्रीमदिन्दुविरचितया शशिलेखाख्यव्याख्यया टिप्पण्या च समलङ्कृतम् ।

## ज्वरचिकित्सितम्

नाम

## प्रथमोऽध्यायः ।

### सर्वाङ्गसुन्दरी

अथेदानीं चिकित्सितस्थानारम्भः । तस्यायं संबन्धः । रोगपरीक्षा निदानस्थाने गदिता । साम्प्रतं चिकित्सा वक्तुं युक्ता । तथा च मुनिः— "रोगमादौ परीक्षेत तदनन्तरमौषधम्" इति । तस्माच्चिकित्सितस्थानारम्भो न्याय्यः । तत्र यथोद्देशो व्याधीनां निदानस्थाने, तेनैव क्रमेणास्य स्थानस्य विरचना युक्तेति ज्वरचिकित्सितमेव विवक्षुराह —

**अथातो ज्वरचिकित्सितं नामाध्यायं व्याख्यास्यामः ।**
**इति ह स्माहुरात्रेयादयो महर्षयः ॥**

**अथात इत्यादि ॥** "इति ह स्माहुरात्रेयादयो महर्षयः" इत्यनेनागमशरणत्वमात्मनः प्रतिपादयति ॥

### शशिलेखा

निदानस्थाने ज्वरादिक्रमेण प्रधानरोगाणां हेत्वादिकमुक्त्वा तेषामेव तेनैव क्रमेण साध्यानां सतामवसरप्राप्तं प्रतीकारं प्रदर्शयितुं चतुर्थस्थानमारभ्यते ।

---

1 पाठ्यकारस्त्वाह— "हेतुलिङ्गस्कन्धं परिसमाप्य पुनरौषधस्कंन्धं वक्ति । तथा चोक्तं तन्त्रान्तरे—'रोगमादौ परीक्षेत तदनन्तरमौषधम्' इति । तत्रापि

अथेत्यादि पूर्ववद्व्याख्येयम्, इतीत्यादि च। चिकित्सितं प्रतीकारः॥

**आमाशयस्थो हत्वाऽग्निं सामो मार्गान् पिधाय यत्।**
**विदधाति ज्वरं दोषस्तस्मात् कुर्वीत लङ्घनम् ॥ २ ॥**
**प्राग्रूपेषु ज्वरादौ वा बलं यत्नेन पालयन्।**

सर्वाङ्गसुन्दरी

**आमाशयस्थ इत्यादि ॥** आमाशयस्थः सामो दोषो वह्निं हत्वा तथा मार्गान् पिधाय स्रोतांसि स्थगयित्वा यद्यस्माद्धेतोर्ज्वरं विदधाति, तस्मात् कारणात् लङ्घनं कुर्वीत। लङ्घनमत्रोपवासः। तथा चोक्तम्—"लङ्घनस्याविशेषोक्ता-वुपवासं प्रकल्पयेत्" इति। अत एवायमपि वक्ष्यति—"तस्मादादोषपचनाज्ज्व-रितानुपवासयेत्"इति। कदा लङ्घनं कुर्वीतेत्याह—प्राग्रूपेषु पूर्वलक्षणेषूत्पन्नमात्रेष्वेव ज्वरादौ वा उत्पन्नमात्रे वा ज्वरे सति। किं कुर्वन् लङ्घनं कुर्वीतेत्याह—बलं यत्नेन पालयन्। प्राणांस्तात्पर्येण रक्षन्। तदविरोधेनेत्यर्थः॥

शशिलेखा

आमाशयस्थ इत्यादिना प्रकृतार्थप्रस्तावना। यद्यस्मादामाशयस्थत्वा-दिरूपो दोषो दुष्टो वातादिर्ज्वरं विदधाति, तस्माज्ज्वरे प्रथमं लङ्घनं कुर्वीतेति

---

ज्वरचिकित्सा प्रथममुच्यते। सर्वरोगचिकित्सितमनुक्त्वा कथं ज्वरचिकित्सितमिति केचित्। अत्र ब्रूमः— सर्वरोगनिदानभूता दोषा एव। तेषां पुनः संक्षेपेण दोषोपक्रमणीये "वातस्योपक्रमः स्नेहः स्वेदः संशोधनं मृदु" इत्यादिना "अनुवासनम्" इत्यन्तेन ग्रन्थेन वातस्य, "पित्तस्य सर्पिषः पानम्" इत्यादिना "विरेकश्च विशेषतः" इत्यन्तेन ग्रन्थेन पित्तस्य, "श्लेष्मणो विधिना युक्तम्" इत्यादिना "निस्सुखत्वं सुखाय च" इत्यन्तेन ग्रन्थेन कफस्य च चिकित्सितमुक्तम्। संसर्गसन्निपातानामपि "तं यथास्वं विकल्पयेत्"इत्यनेन प्रोक्तमेव। इति दोषाणां सर्वरोगनिदानभूतानां चिकित्सितमुक्तम्। अपि च विशेषतो वातस्य वातव्याधौ वक्ष्यति। पित्तस्य पाण्डुरोगादौ, कफस्य पुनरत्रैव, कासादौ च। ज्वरादीनां पुनः सर्वत्र नोक्तमिति यदतो ज्वरचिकित्सितमेवादौ वक्ति" इति॥

संबन्धः। हेतुनिर्देशेनैतत् प्रदर्श्यते। येषु ज्वरेष्वेवंरूपता संप्राप्तेस्तत्रैव लङ्घनं विधेयं, नान्यत्र। तथा च वक्ष्यति—"शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनं नेष्यते" इति। अत्र च लङ्घनशब्देन न वमनादिकं सर्वं लङ्घनमुच्यते, किंतूपवास एव। ननु तल्लङ्घनं कस्यामवस्थायां कुर्वीतेत्याह—प्राग्रूपेष्वित्यादि। ज्वरस्य पूर्वरूपदर्शन एव लङ्घनं कुर्वीत। यदा तु प्राग्रूपदर्शनकाले निदानस्य साधारणत्वादपरिज्ञानाद्वा लङ्घनाविषयता आशङ्क्यते, तदा ज्वरादावपि योज्यम्। ज्वरस्यादिर्ज्वरादिः। ज्वरप्रारम्भ इत्युक्तं प्राग्रूपेषु ज्वरादौ वेति। अन्ये पुनरेवं वर्णयन्ति। ज्वरस्य प्राग्रूपेषु लङ्घनमवश्यं कुर्वीत। ज्वरादौ ज्वर-व्यक्तताप्रादुर्भावे वा लङ्घनं कुर्वीत। तेन शुद्धवातादिविषये व्यक्ते ज्वरे लङ्घनं न विधेयमिति। बलं यत्नेन पालयन्नित्यनेनैतदुच्यते। तावल्लङ्घनं कुर्वीत, यावता बलहानिर्न भवति। तेन लङ्घितलिङ्गप्रादुर्भावाभावेऽपि बलपालनानुरोधेन लङ्घनाद्विरमेत्[2]। बलाधिष्ठानमित्यादिना बलपालने हेतुरुच्यते॥

सर्वाङ्गसुन्दरी

ननु कुत एवं विधीयत इत्याह—

**बलाधिष्ठानमारोग्यमारोग्यार्थः क्रियाक्रमः ॥ २ ॥**

**बलेत्यादि ॥** यस्मादारोग्यं स्वास्थ्यं बलाधिष्ठानं बलम् अधिष्ठानम् आश्रयो यस्य तदेवम्। तथा क्रियाक्रमः आरोग्यार्थः स्वास्थ्यप्रयोजनः॥

लङ्घने विहिते सति यत्स्यात्तदाह—

**लङ्घनैः क्षपिते दोषे दीप्तेऽग्नौ लाघवे सति।**

**[3]लङ्घनैरिति ॥** लङ्घनैरुपवासैर्दोषे पूर्वोक्ते क्षपिते क्षयं नीते। तथाग्नौ दीप्ते समिद्धे

---

2 ग्रन्थान्तरे चोक्तम्—"एकाहं वा द्विरात्रं वा त्रिरात्रं वा ज्वरातुरम्। लङ्घयेद्बलमालोच्य..................."इति

3 यद्यपि लङ्घनं द्वादशसु परिभाषितं लङ्घनबृंहणीये अत्र पुनरुपवासे वर्तते कुतस्तेषामवस्थावशात् प्रयोगः इति जर्जटः॥

स्वास्थ्यं क्षुत्तृड् रुचिः पक्तिर्बलमोजश्च जायते ॥ ३ ॥

सति। तथा लाघवेऽङ्गानां सति स्वास्थ्यादि जायते। स्वास्थ्यं यथाप्रकृतित्वम्। रुचिरन्नाभिलाषः। पक्तिः पाक आमस्य। बलमुत्साहः। ओजः परं धातुतेजः। क्षपिधातुरनुक्तोऽपि धातुगणे शिष्टप्रयोगवशादङ्गीकृतः। लङ्घनैरिति जातौ बहुवचनम्। तेन कदाचिदेकेनैव लङ्घनेन कदाचिदनेकैर्दोषक्षयो जायत इति ज्ञेयम्।

शशिलेखा

लङ्घनैरित्यादिना सर्वलङ्घनानां ज्वरविषयाणां सुप्रयुक्तानां फलनिरूपणम्। लङ्घनैर्वमनादिभिर्दोषे तत्साध्ये ज्वरारम्भके क्षपिते तत्क्षपणाच्च भस्मापनयनेनेवाग्नौ दीप्ते लाघवे चोत्पन्ने स्वास्थ्यादिकं जायते। दोषक्षपणादूर्ध्वं लङ्घनेनानिन्धनत्वादग्नेर्नाश एव स्वास्थ्याद्यभावश्च। तथा चोक्तम्—"संशोधनास्रविस्रावस्नेहयोजनलङ्घनैः। यात्यग्निर्मन्दताम्.... ...."इति। अत्र च लङ्घनशब्देन उपवास एव भण्यते। स्वास्थ्यं रोगाभावः। पक्तिरन्नादीनां पाकः॥

[1]तत्रोत्कृष्टे समुत्क्लिष्टे कफप्राये चले मले।
सहृल्लासप्रसेकान्नद्वेषकासविषूचिके ॥ ४ ॥

सद्योभुक्तस्य संजाते ज्वरे सामे विशेषतः।
वमनं वमनार्हस्य शस्तं कुर्यात्तदन्यथा ॥ ५ ॥

श्वासातीसारसंमोहहृद्रोगविषमज्वरान्।

सर्वाङ्गसुन्दरी

तत्रेत्यादि॥ तत्र तस्मिन् मले उत्कृष्टे गुणकर्मलक्षणतोऽधिके तथा कफप्राये कफबहुले वाताख्ये पित्ताख्ये वेति सामर्थ्याद् गम्यते। समुत्क्लिष्टे स्वस्थानाच्चलिते बहिर्निर्याते। तथा चले शिथिले। उत्क्लिष्टोऽपि कदाचित् स्थानान्तरावष्टम्भा-

---

1 आमाशयस्थ इत्यादिना निदानोक्तं स्मारयति। लङ्घनमित्यनेनोपवासः प्राधान्येन निगद्यते। तत्रेत्यादिना लङ्घनेषु वमनस्थानं कथयति इति पाठ्यकारः॥

दचलः स्यात्। एतदेव कफोत्क्लिष्टादिकं दर्शयति। हल्लासेत्यादि—हल्लासादीनां द्वन्द्वः। सह तैर्वर्तते यस्तस्मिन्। हल्लासः उद्वमनमिवानुभवो हृदयस्य। प्रसेकः पानीयस्येव निष्ठीवनम्। सद्योभुक्तस्येत्यादि—ईदृशे मले सति सद्यः कृताहारस्य ज्वरे संजाते विशेषेण सामे ज्वरे वमनार्हस्य वमनं शस्तम्। वमनार्हा वमनविरेचनविधौ प्रोक्ताः। अन्यथा उक्तविधिविपर्ययेण तद्वमनं कृतं श्वासादीन् कुर्यात्। तत्रानुत्क्लिष्टः कफप्रधानः स्थिरो हल्लासादिरहितो विपरीतः॥

शशिलेखा

ननु किं सर्वत्राऽनियमेन सर्वमेव लङ्घनं विधेयमाहोस्वित् केनचिद्विशेषेणेत्याह— उत्कृष्टः प्रभूतः। समुत्क्लिष्टः स्थानात् समन्ताच्चलितः। कफप्रायः श्लेष्मप्रधानः। चलः नैकत्र स्थितिशीलः। सह हल्लासादिभिर्वर्तते यो मलस्तथाविधे मले दोषे वमनार्हस्य सतो ज्वरितस्य वमनमेव शस्तम्। नान्यलङ्घनमिति संबन्धः। सद्योभुक्तस्य त्वष्टविधेऽपि ज्वरे संजाते वमनमेव शस्यते। आगन्तावपि भोजनस्याजरणादिना दोषानुबन्धरक्षणार्थम्। सामे तु ज्वरे सद्योभुक्तस्य सञ्जाते विशेषतो वमनम्। वमनार्हग्रहणेन प्रतिषिद्धवमनानां गर्भिण्यादीनां वमनविषयेऽपि ज्वरे वमनं प्रतिषिध्यते। तच्च वमनमन्यथा उत्क्लिष्टत्वादिलक्षणविपरीते मले प्रयुक्तं श्वासादीन् ज्वरितस्य कुर्यात्। अनुत्क्लिष्टस्योत्क्लेशेन वायोर्मार्गरोधाच्छ्वासः। ईषदुत्क्लिष्टस्य स्यन्दनेनाग्निनाशादतिसारः। उपशुष्के दोषे औषधस्य तैक्ष्ण्यात् संमोहः। तथाविध एवोर्ध्वनयनाद्धृद्रोगः। दोषस्य स्वल्पत्वात् बहिरनिर्हरणात् दूरदूरतरस्रोतःपूरणेन वा यथाहेतुः सततकादिको विषमज्वरः॥

वमनद्रव्याण्याह—

पिप्पलीभिर्युतां गालां कलिङ्गैर्मधुकेन वा ॥ ६ ॥
उष्णाम्भसा समधुना पिबेत् सलवणेन वा।
पटोलनिम्बकर्कोटवेत्रपत्रोदकेन वा ॥ ७ ॥
तर्पणेन रसेनेक्षोर्मद्यैः कल्पोदितानि वा।
वमनानि प्रयुञ्जीत बलकालविभागवित् ॥ ८ ॥

सर्वाङ्गसुन्दरी

**पिप्पलीभिरित्यादि** ॥ गाला मदनफलम्। अस्य च निरपायत्वाच्छ्रेष्ठत्वाच्च पिप्पल्यादिद्रव्येभ्योऽनेन सहोपयोगिभ्यो बहूपयोगितया प्रधानविभक्त्या प्रागुपन्यासः। अन्यथा—"कल्पयेत् सदृशान् भागान् प्रमाणं यत्र नोदितम्" इति मदनफलेन पिप्पल्यादीनां च तुल्यं प्रमाणं प्राप्नुयात्। पिप्पलीभिर्युतां गालाम्, अथवा शक्रयवैर्युताम्, अथवा मधुयष्टिकया वा युताम् उष्णाम्बुना माक्षिकयुतेन वा सह पिबेत्। अथवा पटोलादीनां पत्रोदकेन वा सह पिबेत्। अथवा तर्पणादिभिः पिबेत्। अथवा कल्पोदितानि वमनकल्पोक्तानि वमनानि योग्यानि प्रयुञ्जीत। बलकालविभागवित्, अस्यां देहबलावस्थायां तथा व्याधिकालावस्थायां चेदं वमनं दातुं योग्यमिति यो विभागं वेत्ति स बलकालविभागवित् ॥

शशिलेखा

पिप्पलीभिरित्यादिना वमनयोगानाह। दोषदेशाद्यपेक्षया यथ योग्यं योगविकल्पः। गाला मदनफलम्। तां गालां कदाचित् पिप्पलीभिर्युक्तामुष्णाम्बुना पिबेत्। वमनार्थमित्यर्थात्। कदाचिदिन्द्रयवैः, कदाचिन्मधुयष्ट्या, कदाचित्समधुनोष्णाम्भसा, कदाचिल्लवणान्वितेनाम्भसा युक्ताम्। अत्र मधुनोऽप्रयोगः। गालानां संयोगिनां समानां कोष्ठापेक्षया मात्रा। मधुलवणयोरौषधव्याप्तियोग्यता मात्रा। अथवा पटोलादीनां पत्रजलेन पिबेदिति संबन्धः। पत्राणां जलस्य च जलसंस्कारापादनी मात्रा। पाने तु जलस्य कोष्ठाद्यपेक्षया तृप्त्यवसाना वा मात्रा। तर्पणादीनामेवमेव। अत्रापि पिबेदिति संबध्यते। तर्पणं मन्थः। मद्यं पूर्वभुक्ताहारापेक्षया यथायोग्यमिति वमनानि बलकालविभागवित् प्रयुञ्जीत। अथवा वमनकल्पे उदितानि प्रदर्शितानि वमनानि

---

1 वमनानीति बहुवचनं किमुच्यते? न सकृत्। यावन्निर्हृतदोषः इति जर्जटः।

ഗാള = മലങ്കാരക്കായ. കലിംഗം = കടകപ്പാലയരി. മധുകം = ഇരട്ടിമധുരം. കക്കോടം = പാവിട്ട. വേത്രം = ചൂരൽ (പിരവ്) തർപ്പണം = അരിപ്പൊടി (മലർപൊടി)

वा प्रयुञ्जीत। वमनमित्यङ्गुल्यादिनोपायेनोद्गिरणम्। तेनैतदुक्तम्—"व्याध्यौषधबलानुरोधेन औषधविषयानुरोधेन चान्यतमस्य वमनस्य प्रयोगः" इति ॥

**कृतेऽकृते वा वमने ज्वरी कुर्याद्विशोषणम्।**
**दोषाणां समुदीर्णानां पाचनाय शमाय च ॥ ९ ॥**

सर्वाङ्गसुन्दरी

**कृत इत्यादि ॥** वमनयोग्यो यो ज्वरी स कृते वमने, अपरस्तु वमने अयोग्यः सोऽकृते वमने विशोषणमुपवासलक्षणं कुर्यात्। एवं कृतवमनोऽकृतवमनो वा ज्वरी लङ्घनं सर्वथा कुर्यात्। किमर्थमित्याह—दोषाणां वातादीनां समुदीर्णानां सामानां स्वस्थानात्प्रच्युतानां पाचनाय पक्त्यर्थं शमाय शान्त्यर्थं च। निरामाणां पुनस्समुदीर्णानां शान्त्यर्थमेव ॥

शशिलेखा

अनन्तरोक्तप्रकारेण कृते वमने विशोषणमुपवासादिना कुर्यात्। ननु सम्यग्योगेऽप्यवश्यं तदहरेव वमनविधिप्रदर्शितप्रकारेण पेयां सेवेत। तथा यत्रापि वमनस्याविषयत्वाद्विषयेऽपि वा निमित्तान्तराद्वमनं न कृतम् तत्रापि विशोषणं कुर्यात्। दोषाणामित्यादिना यथोक्तोपशोषणप्रयोजनप्रदर्शनम् ॥

**दोषेण भस्मनेवाग्नौ छन्नेऽन्नं न विपच्यते।**
**तस्मादादोषपचनाज्ज्वरितानुपवासयेत् ॥ १० ॥**

सर्वाङ्गसुन्दरी

**दोषेणेत्यादि ॥** दोषेणामाख्येन वातादिना वा सहैकलोलीभूतेनाग्नौ छन्ने छादिते अन्नमामाशयस्थं न विपच्यते। भस्मनेव। यथा बाह्येऽग्नौ स्थगिते तोयतण्डुलादिकं स्थालीस्थं न विपच्यते, तथैवामाशयस्थं सदामाख्येन छन्नेऽग्नौ न विपच्यते। यतश्चैवं तस्माद्धेतोरामदोषस्य पूर्वोक्तस्य पचनं पाकमवधिं कृत्वा ज्वरितान्नरानुपवासयेत् ॥

शशिलेखा

दोषेणेत्यादिनोपवासावधिप्रदर्शनम्। यथा बाह्येऽग्नौ भस्मना छन्नेऽन्नं न विपच्यते, एवमान्तरेऽप्यग्नौ दोषेणामाख्येन छन्ने। तस्माद्दोषस्य निरामतोत्पत्तिरुपवासानामवधिः। उपपूर्वो वसिर्भोजननिवृत्तौ वर्तत इति ॥

तृष्णगल्पाल्पमुष्णाम्बु पिबेद्वातकफज्वरे।
तत्कफं विलयं नीत्वा तृष्णामाशु निवर्तयेत् ॥ ११ ॥
उदीर्य चाग्निं स्रोतांसि मृदूकृत्य विशोधयेत्।
लीनपित्तानिलस्वेदशकृन्मूत्रानुलोमनम् ॥ १२ ॥
निद्राजाड्यारुचिहरं प्राणानामवलम्बनम्।

सर्वाङ्गसुन्दरी

**तृष्णगिति ॥** तृष्णावान् नरोऽल्पाल्पं स्तोकं वातकफज्वरे उष्णाम्बु पिबेत्। तृष्णगिति "स्वपितृषोर्नजिङ्"इति नजिङ्। अल्पाल्पमिति "प्रकारे गुणवचनस्य"इति द्वित्वम्। तदुष्णाम्बु पीतं कफं वातस्त्यानं विलयं नीत्वा विलीनविग्रहतामापाद्य तृष्णामाशु निवर्तयेत्, तथाऽग्निमुदीर्य समिद्धं कृत्वा स्रोतांसि विशोधयेत्। किं कृत्वा—मृदूकृत्य तेषां स्रोतसां मार्दवमुत्पाद्य। तथा लीनान्यप्रवृत्तस्वरूपाणि च तानि पित्तानिलस्वेदशकृन्मूत्राणि च तेषामनुलोमनं प्रवर्तनम्। तथा प्राणानां जीविताख्यानामवलम्बनम्। तदुष्णं जलमाश्रित्य तदा प्राणा वर्तन्त इत्यर्थः। अनेनोष्णाम्बुकथनव्याजेन वातकफज्वरस्वरूपमपि किंचित्प्रकाशयति। यथा वातशोषितेन कफेन स्त्यानीभूतेनात्र तृष्णा जायते, तथाऽधिकमग्निमान्द्यम्, स्रोतसामत्यशुद्धत्वम्, तथा लीनानि पित्तादीन्यत्र स्युरिति ॥

शशिलेखा

[1]तस्मिंश्च लङ्घने क्रियमाणे तृष्णगतिमात्रां तृष्णामनुभवन्नेव वातकफज्वरे अल्पाल्पमुष्णाम्बु पिबेत्। तच्चोष्णाम्बु पीतं मार्गावारकं कफं विलयं नीत्वाऽऽशु

---

1 किं वातकफज्वरे द्वन्द्वसमुत्थ एव। वाते श्लेष्मणि वा कवोष्णं जलं हितम्। तयोः समुदितयोरप्युष्णमविरोधीति जर्जटः।

तृष्णां निवर्तयेत्। अग्न्युदीरणेन च स्रोतांसि मृदूकृत्य तान्येव शोधयेत्। तथा लीनानामनुत्क्लिष्टरूपाणामपि पित्तादीनामनुलोमनं मार्गप्रेरकं निद्रादिहरं च। निद्रा ह्यस्वास्थ्यहेतुका गृहीता। प्राणानामवलम्बनमम्बु संतर्पणस्वभावत्वात्। एवं यथोक्तविषये उष्णाम्बुन एव प्रयोगः ॥

विपरीतमतश्शीतं दोषसङ्घातवर्धनम् ॥ १३ ॥

शशिलेखा

विपरीतमित्यादिना तत्रैव शीताम्बुपरिहारे हेतुरुच्यते। उष्णाम्बुनो गुणैर्विपरीतं शीताम्बु दोषसङ्घातवर्धनं च ॥

उष्णमित्यादिना केवलपित्तादीनामुष्णाम्बुप्रतिषेधं शीताम्बुप्रयोगं च दर्शयति ॥

उष्णमेवंगुणत्वेऽपि युञ्ज्यान्नैकान्तपित्तले।
उद्रिक्तपित्ते दवथुदाहमोहातिसारिणि ॥ १४ ॥
विषमद्योत्थिते ग्रीष्मे क्षतक्षीणेऽस्रपित्तिनि।
घनचन्दनशुण्ठ्यम्बुपर्पटोशीरसाधितम् ॥ १५ ॥
शीतं तेभ्यो हितं तोयं पाचनं तृड्ज्वरापहम्।

सर्वाङ्गसुन्दरी

एवंगुणमप्युष्णाम्बु एकान्तपित्तले केवलपित्तले ज्वरे ज्वरिणि वा न युञ्ज्यात्। तथोद्रिक्तमधिकं पित्तं यस्मिन् तस्मिंश्च न युञ्ज्यात्। तथा तदुष्णाम्बु दवथ्वादिमति नरे न युञ्ज्यात्। चक्षुरादिभ्यो यस्तीव्र ऊष्मा प्रवर्तते, स दवथुः। सर्वाङ्गीणस्तीव्र ऊष्मा दाहः। मोहो भ्रमः। तथा विषमद्याभ्यामुत्थिते जाते ज्वरे। तथा ग्रीष्मकाले। तथा क्षतश्च क्षीणश्च क्षतक्षीणः। क्षत उरःक्षतः। क्षीणो धात्वपचयवान्। तस्मिंस्तथाभूते च नरे न युञ्ज्यात्। तथाऽस्रपित्तिनि रक्तपित्तवति। घनेति। तेभ्यः उद्रिक्तपित्तादिभ्यः पिपासितेभ्यः घनादिसाधितं शीतं तोयं हितम्। पानीयसाधने च तन्त्रान्तरे विधिरुक्तः। यथा— "कर्ष

गृहीत्वा द्रव्यस्य तोयस्य प्रस्थमावपेत्। अर्धावशेषं तद्ग्राह्यं तोयपाके त्वयं विधि:" इति ॥

शशिलेखा

[1]उष्णमनन्तरप्रदर्शिताग्न्युदीरणस्रोतश्शोधनत्वादिगुणसंयुक्तत्वेऽप्येकान्तपित्तलादौ व्याधावातुरे वा न युञ्ज्यात्। उद्रिक्तमन्यदोषाभिभावि पित्तं यत्र। दवथुश्चक्षुरादीन्द्रियाश्रयेषु दाहः। दाहः सर्वाङ्गीणस्तीव्र एव। ग्रीष्मकाले स्वभावादुष्णाम्बु नेष्यते। यदा तु ग्रीष्मे देशादिविशेषवशाद्वातकफस्योत्कृष्टता, तदा स्तोकं हितमेव। तेभ्यश्चैकान्तपित्तलादिभ्यो घनादिसाधितं शीतं तोयं हितम्। तद्धि पाचनं तृड्ज्वरापहं चेति ॥

उष्णाम्बुप्रतिषेधप्रसङ्गेन सर्वेषां पित्तविरुद्धानां ज्वरे प्रतिषेध उच्यते—

**ऊष्मा पित्तादृते नास्ति ज्वरो नास्त्यूष्मणा विना ॥ १६ ॥**
**तस्मात्पित्तविरुद्धानि त्यजेत् पित्ताधिकेऽधिकम्।**
**स्नानाभ्यङ्गप्रदेहांश्च परिशेषं च लङ्घनम् ॥ १७ ॥**

सर्वाङ्गसुन्दरी

**ऊष्मेत्यादि ॥** पित्तं विना ऊष्मा न विद्यते। ज्वरश्चोष्मणा विना नास्ति। सन्तापलक्षणत्वाज्ज्वरस्य। यतश्चैवं तस्माद्यानि पित्तस्य विरुद्धान्याहारविहारादीनि, तानि सर्वस्मिन् ज्वरे त्यजेत्। पित्ताधिके पुनरधिकं कृत्वाऽतिशयेन त्यजेत्। "पित्ताधिके" इत्यधिकग्रहणेनेदं प्रतिपादयति—सर्वो ज्वरस्त्रिदोषजो भूयसा व्यपदेश इति। स्नानेत्यादि। न केवलं ज्वरे पित्तविरुद्धानि त्यजेत्। यावत् स्नानादींश्च त्यजेत्। स्नानादीनां च पित्तहरत्वाशङ्कया सेव्यत्वे प्राप्तेऽचिन्त्यप्रभावत्वात् ज्वरे विरुद्धानीति तत्सेवनं निषे-

---

1 ननु नागरस्य कटुकत्वात्कथं प्रयोग ? उच्यते आमाशयसमुत्थत्वाज्ज्वरस्य इष्यत एवान्यद्रव्यसंयुक्तस्य जलसंस्कारार्थमावापः। तथा चान्ये पठन्ति— "यच्चास्य शृतशीतांबुषडङ्गादि प्रयुज्यते कर्षमात्रं ततो दत्वा क्वाथयेत् प्रास्थिकेऽम्भसि" इति जर्जटः।

धयति । प्रदेहश्चन्दनाद्यनुलेपः । परिशेषं च लङ्घनं त्यजेत् । यल्लङ्घनमुक्तमुपवासलक्षणं ततो यदन्यत् तत् परिशेषं शुद्ध्याद्येकादशप्रकारं च त्यजेत् । उपवासलक्षणं तु लङ्घनं नवज्वरे कर्तव्यमेव ॥

शशिलेखा

ऊष्मेत्यादि ॥ पित्तनिमित्तत्वात् सर्वज्वरेऽपि पित्तविरुद्धानि त्यजेत् । पित्ताधिके तु ज्वरे पित्तविरुद्धान्यधिकं त्यजेत् । पित्तविरुद्धं यत्पित्तकारि तत्कफज्वरादौ किञ्चित् त्यजेदित्यधिकशब्दाल्लभ्यते । स्नानादींश्च सर्वस्मिन् ज्वरे त्यजेत् । तथा परिशेषं लङ्घनम् । अवस्थाविशेषवशेनोक्ताल्लङ्घनादन्यल्लङ्घनं परिशेषम् ॥

**अजीर्ण इव शूलघ्नं सामे तीव्ररुजि ज्वरे ।**
**न पिबेदौषधं तद्धि भूय एवाममावहेत् ॥ १८ ॥**
**अमाभिभूतकोष्ठस्य क्षीरं विषमहेरिव ।**

सर्वाङ्गसुन्दरी

**अजीर्ण इति** ॥ अजीर्णे सामे तीव्ररुज्यपि यथा शूलघ्नमौषधं न पिबेत् प्रत्यवायभयात्, तथैव सामे ज्वरे दारुणपीडावति तदानीमामपक्त्यर्थं मुस्तापर्पटकाद्यौषधं न पिबेत् । हि यस्मात्तदौषधं पीतमस्यामवस्थायामामाभिभूतकोष्ठस्य प्रयुक्तं भूय एवाममावहेत् विदग्धत्वात् । अत्र च साम इत्युक्ते: बह्वाम इति गम्यते । अल्पामे ह्यजीर्णे भेषजमनुज्ञातमेव । तथोऽवाच तन्त्रकार: — "जीर्णाशने तु भैषज्यं युञ्ज्यात्स्तब्धगुरूदरे दोषशेषस्य पाकार्थमग्ने: संधुक्षणाय च" इति । तस्मात् बह्वाम इति बोद्धव्यम् । अथात्र दृष्टान्तमाह —"क्षीरं विषमहेरिव" । यथा क्षीरं विषहरमप्यभिहितमहीनां तदेव विषं कुर्यात् ॥

शशिलेखा

अजीर्ण इत्यादिना सामे ज्वरे औषधप्रतिषेधप्रदर्शनम् । अजीर्ण इवेत्यनेन "तीव्रार्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम्" इति च स्मारयति । तीव्ररुजाग्रहणं प्रभूतामोपलक्षणार्थम् । अल्पे त्वामेऽग्नेः किञ्चिच्छक्तत्वात् क्वाथादिकं प्रयुज्यत एव । न केवलं सामे औषधं त्यजेत् यावत् क्षीरमपि त्यजेदिति

प्रदर्शनार्थमाह — आमाभिभूतकोष्ठस्येत्यादि । यस्य ह्यामेनाभिभूतः कोष्ठस्तस्य दीपनत्वादियुक्तमप्यौषधं न युज्यते । किमुत क्षीरम् । आहिदृष्टान्तेन क्षीरस्य दुष्टता प्रदर्शिता इति ।

**सोदर्दपीनसश्वासे जङ्घापर्वास्थिशूलिनि ॥ १९ ॥**
**वातश्लेष्मात्मके स्वेदः प्रशस्तः स प्रवर्तयेत् ।**
**स्वेदमूत्रशकृद्वातान् कुर्यादग्नेश्च पाटवम् ॥ २० ॥**
**स्नेहोक्तमाचारविधिं सर्वशश्चानुपालयेत् ।**

सर्वाङ्गसुन्दरी

**सोदर्देत्यादि ॥** उदर्दादयः प्रागुक्ताः । उदर्दश्च पीनसश्च श्वासश्च तैः सह वर्तते यो ज्वरस्तस्मिन् । तथा जङ्घा च पर्वाणि चास्थीनि च तत्र शूलं तद्विद्यते यस्य तस्मिंश्च । तथा वातश्लेष्मात्मके वातकफोद्भवे स्वेदः शस्तो हितः । स आचरितः स्वेदादीन्प्रवर्तयेत् । अग्नेश्च पाटवं दीप्ततरत्वं विदध्यात् । तथा स्नेहोक्त स्नेहविध्यध्याये कथितमाचारविधिं च सर्वतोऽनुपालयेत् । कुर्यादिदित्यर्थः ॥

शशिलेखा

प्रसङ्गेन ज्वरे परिहार्यदर्शनं कृत्वा सोदर्देत्यादिनाऽवस्थाविशेषेण विधेयविशेषं नियमयति । वातश्लेष्मात्मके ज्वरे उदर्दादिना यथासम्भवं संयुक्ते स्वेदाख्य उपक्रमः शस्तः । स स्वेदः स्वेदादीनि प्रवर्तयेत् । उदर्दो नाम कफरोगः प्रदर्शितः । स्नेहोक्त आचारविधिरुष्णोदकोपचारी स्यादित्यादिकः ॥

**लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः ॥ २१ ॥**
**मलानां पाचनानि स्युर्यथावस्थं क्रमेण वा ।**

सर्वाङ्गसुन्दरी

**लङ्घनमित्यादि ॥** मलानां वातादीनां पृथक् स्थितानां संसर्गस्थितानां सन्निपातस्थितानां च सामर्थ्याल्लङ्घनादयस्तिक्तरसावसानाः पाचनानि स्युः ।

यथावस्थमवस्थानतिक्रमेण। कस्याञ्चित् ज्वरावस्थायां लङ्घनमुपवासलक्षणं मलानां पाचनं स्यात्। कस्याञ्चित् स्वेदनम्। कस्याञ्चित्कालः। कस्याञ्चित् यवाग्वः। कस्याञ्चित् तिक्तको रसः। तिक्तरसाक्रान्तद्रव्योपयोगः। एवमवस्थावशाल्लङ्घनादयस्तिक्तरसान्ताः मलानामेकैकशः पाचनानि स्युः। अथवा क्रमेण पाचनानि स्युः। यथा लङ्घनं स्वेदनं च कृत्वा षडहादूर्ध्वं यवाग्वस्तिक्तको रसः पाचनान्यविपक्वानां मलानां तरुणे ज्वरे स्युः। "तत्रामाशयस्थ" इत्यादिना ग्रन्थेन निर्दिष्टा लङ्घनयोग्यावस्था। "सोदर्दपीनस" इत्यादिना स्वेदनयोग्यावस्था। "इत्ययं षडहो नेय" इत्यादिना निर्दिष्टा कालयोग्यावस्था। "युक्तं लङ्घितलिङ्गै"स्तुइत्यादिना निर्दिष्टा पेयायोग्यावस्था। "उद्रिक्तपित्त" इत्यादिना तिक्तरसोपयोगयोग्यावस्थेति यथावस्थं द्रष्टव्यम्। क्रमस्तु यथा——वातश्लेष्मात्मके सामे ज्वरे लङ्घनं कुर्वन्नेव स्वेदनं द्वित्रादिदिनलक्षणं च कालं लङ्घितलक्षणयुक्तस्य यवाग्वादिपेयाद्यन्नं भुक्तस्यानन्तरं मुस्तापर्पटकादितिक्तरसोपयोग इति क्रमार्थः॥

### शशिलेखा

[1]लङ्घनमित्यादिना पूर्वोक्तस्यानियमेन क्रमनियमेन च प्रदर्शनम्। लङ्घनमुपवासः। स्वेदनं स्वेदः। कालः परिवासक्रमः। यवाग्वः पेयाः। तिक्तको रसस्तिक्तरसयुक्तद्रव्योपयोगः। वमनं शोधनं, न तु पाचनम्। यथावस्थमित्युक्तविषयानतिक्रमेण मलानां पाचनानि स्युः। अथवा क्रमेण लङ्घने क्रियमाणे दोषस्य निबिडत्वनाशाय प्रथममेव स्वेदनं, ततः काल उपवासनिरपेक्षतया, तत उपवासेन स्वेदेन कालक्रमेण च दोषे मार्दवं याते बुभुक्षायां जातायां यवाग्वः, ततस्तिक्तो रसो मुस्तापर्पटादि॥

ज्वरे लङ्घनं कुर्वीतेत्युक्तम्। अस्य विशिष्टे विषयेऽपवादमाह —

**शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम् ॥ २२ ॥**
**नेष्यते, तेषु हि हितं शमनं यन्न कर्शनम्।**

### सर्वाङ्गसुन्दरी

**शुद्धेति** ॥ शुद्धेन आमदोषाद्यदुष्टेन वातेन यो ज्वरः स शुद्धवातज्वरः।

---

1 लङ्घनादितिक्तरसान्तं पञ्चविधं पाचनमिति जर्जटः॥

क्षयेण धात्वपचयादिलक्षणेन यो ज्वरः स क्षयज्वरः। यस्तु भूतविषवाय्वग्नि—संप्रहारादिसमुद्भवः स आगन्तुज्वरः। यश्चातरुणो ज्वरः स जीर्णज्वरः। ते विद्यन्ते येषां त एवंभूताः। तेषु लङ्घनं नेष्यते। मुनिभिरिति शेषः। तेषु तर्हि किं कार्यमित्याह —हि यस्मात्तेषु शुद्धवातादिज्वरेषु शमनं हितम्। शमनस्य सन्तर्पणापतर्पणरूपेण द्वैविध्यात्। किं तच्छमनं तेभ्यो हितमित्याह— यन्न कर्शनं, बृंहणमित्यर्थः। यद्येवं तत् स्पष्टमेव बृंहणमित्येवं कस्मान्नोक्तम्, किं शमनं यन्न कर्शनमिति पदद्वयोपादानेन। ब्रूमः। अर्थान्तरद्योतनार्थम्। तथा चायमर्थो विशिष्टः उभयोरुपादानेन प्रकाश्यते यथा न सर्वसर्विकया यत् बृंहणं शमनं तेभ्यो हितम्। किं तर्हि किंचिद्यद्बृंहणं शमनं तत्तेभ्यो हितमि इति॥

शशिलेखा

सामान्येन नवज्वरे लङ्घनोपक्रमाच्छुद्धवातादिज्वराणां लङ्घनस्य प्रतिषेधः जीर्णज्वरे च लङ्घनविषयेऽपि। तेषु च शुद्धवातादिषु यस्माच्छमनं तच्च शमनं यन्न कर्शनं नाप्यतिबृंहणं रोगस्वभावादित्यर्थाल्लभ्यत इति॥

**तत्र सामज्वराकृत्या जानीयादविशोषितम्॥ २३॥**
**द्विविधोपक्रमज्ञानमवेक्षेत च लङ्घने।**

सर्वाङ्गसुन्दरी

**तत्रेत्यादि॥** तत्र तेषु ज्वरिषु मध्ये सामज्वराकृत्या लक्षणेन "ज्वरोपद्रवतीक्ष्णत्वम्" इत्यादिना अविशोषितमलङ्घितं विद्यात्। लङ्घने लङ्घनलक्षणापेक्षायां द्विविधोपक्रमज्ञानं द्विविधोपक्रमणीयाध्यायोक्तलक्षणं चावेक्षेत। तल्लक्षणञ्च "विमलेन्द्रियता सर्ग" इत्यादि॥

शशिलेखा

तत्रेत्यादिना लङ्घनस्यायोगसम्यग्योगप्रदर्शनम्। ज्वरोपद्रवतीक्ष्णत्वादिकं सामज्वराकृतिः। आकृतिर्लक्षणमिति पर्यायौ इति॥

युक्तं लङ्घितलिङ्गैस्तु तं पेयाभिरुपाचरेत् ॥ २४ ॥
यथास्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः[1] ।
तस्याग्निर्दीप्यते ताभिः समिद्भिरिव पावकः ॥ २५ ॥
षडहं वा मृदुत्वं वा ज्वरो यावदवाप्नुयात् ।

सर्वाङ्गसुन्दरी

युक्तमित्यादि ॥ लङ्घितलिङ्गैर्विशोषितलक्षणैर्युक्तं ज्वरिणं नरं ज्ञात्वा तं पेयाभिरुपाचरेत् । किम्भूताभिः—यथास्वौषधसिद्धाभिः । यद्यत् स्वं यथास्वमिति वीप्सायामव्ययीभावः । यथास्वं च तदौषधं च यथास्वौषधम् । वातादेः पृथग्भूतस्य संसृष्टस्य सन्निपतितस्य वा यद्यस्य योग्यमौषधं, तेन सिद्धाभिर्वक्ष्यमाणैः पेयादिद्रव्यैः यथायथं योग्यैः कृताभिरित्यर्थः । पुनः किम्भूताभिः—मण्डः पूर्वः प्रधानोऽच्छतया याभ्यस्ताभिरिति समासः । एवं मण्डात् किञ्चित् घनाः पेयाः कार्या इत्यर्थोऽवतिष्ठते । न तु मण्डः पूर्वः प्रथमोऽभ्यवहारे यासां ता मण्डपूर्वाइति व्याख्येयम् । एवं हि व्याख्यायमाने सर्वासां पेयानां मण्डपूर्वाणां ज्वरेऽभ्यवहारः प्राप्नोति । ततश्च "सृष्टविड्बहुपित्तो वा सशुण्ठीमाक्षिकां हिमां पेयां पिबेत्" । तामपि मण्डपूर्वां पिबेत् न केवलामिति । तथा "अस्वेदनिद्रस्तृष्णार्तः सितामलकनागरैः" साधितां तामपि मण्डपूर्वां पिबेदित्येतच्च क्रियमाणं विरुद्धं स्यात् । तथा च क्व सितामलकेऽत्यर्थं पित्तशमने क्व मण्डः ? तथा क्व बहुपित्तो ज्वरी ? क्व वा मण्डः श्रुतः पिप्पलीशुण्ठीभ्यां युक्तो लाजाम्बु दाडिमैरित्येवं स्वरूपः । पेयायाश्च ज्वरघ्नत्वमुक्तम् । यथा—"क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरापहा । मलानुलोमनी पथ्या पेया दीपनपाचनी" इति । तस्मात् ज्वरिणं सम्यक् लङ्घितं ज्ञात्वा मण्डात् किञ्चित् घनाभिः पेयाभिरसावुपाचरणीयः । तस्य ज्वरिणः ताभिः पेयाभिरग्निर्दीप्यते समिद्ध्यते समिद्भिरेधैः यथा बाह्यः पावकः । मुनिना चोऽक्तम्—

"ताश्च भेषजसंयोगाल्लघुत्वाच्चाग्निदीपनाः ।
वातमूत्रपुरीषाणां दोषाणां चानुलोमनाः ॥

---

1 अथवा यवागूनां प्रतिस्वं संस्कारकपिप्पलीनागरादिकमिति जर्ज्जटः॥

स्वेदनाय द्रवोष्णत्वात् द्रवत्वात्तृड्प्रशान्तये ।
आहारभावात् प्राणाय सरत्वाल्लाघवाय च ॥
ज्वरघ्न्यो ज्वरसात्म्यत्वात्तस्मात् पेयाभिरादितः ।
ज्वरानुपचरेद्धीमान् ..................." ॥ इति (चरकः)

खरणादेप्युक्तं— "पिबेदच्छां ससिक्थां वा स्वां स्वां पेयां नवज्वरे" इति । कियन्तं कालं ज्वरिणं पेयाभिरुपाचरेदित्याह—षडहं वेत्यादि । पेयाभिर्ज्वरिणं षडहं यावदुपाचरेत् । षण्णामह्नां समाहारः षडहम् । तद्धितार्थोत्तरपदेत्यादिना समासः । राजाहःसखिभ्यष्टजिति टच् । न सङ्ख्यादेः समाहार इत्यह्नादेशप्रतिषेधः । अह्नः ष्टखोरेवेति टिलोपः । तथा षडहादर्वागपि यदि शान्तो ज्वरः, तदा दोषदूष्याद्यपेक्षया भक्तयूषादिभिरुपाचरेदिति वाशब्देन गमयति । मृदुत्वं वेति । अथवा षडहेऽतीतेपि यावज्ज्वरो मार्दवं गच्छति तावत् पेयाभिरुपाचरेत् । ननु तर्हि किं षडहं वेत्यनेन । अत्र केचिदेवमाहुः— षडहादर्वाक् प्रायेण मृदुतायामपि जातायां षडहं यावज्ज्वरिणं पेयाभिरुपाचरेदिति द्योतनार्थं षडहं वेति कृतम् । अपरे तु काल एष बाहुल्येन ज्वरमार्दवस्येति ज्ञापनार्थमिदं कृतमिति मन्यन्ते । ज्वरमार्दवे तु जाते पाचनादियोगः कार्यः । तथा च वक्ष्यति—"ततः पक्वेषु दोषेषु लङ्घनाद्यैः प्रशस्यते कषायः । " इत्यादि ॥

**शशिलेखा**

तञ्च ज्वरितं चशब्दाभिहितेन सामज्वरलिङ्गविपर्यासेन द्विविधोपक्रमणीयोक्तैश्च लङ्घितलिङ्गैर्युक्तं, ज्ञात्वा पेयाभिरुपाचरेत् । किम्भूताभिराह —यथास्वौषधसिद्धाभिः । यस्मिन् ज्वरे यदेव कषायकल्पनौषधमुक्तं तेनौषधेन साधिताभिः । मण्डः पूर्वो यासां ताभिः । लङ्घने कृते मण्डः, ततः पेया । कियत्कालमित्याह —आदितो ज्वरारम्भदिनात्प्रभृति षडहं यावत् । यत्र तु षडहात्पूर्वं लङ्घितलिङ्गाभावात् पेया न प्रयुक्ता तत्र यदा प्रयुज्यते तदा तासां, ज्वरमार्दवोत्पत्तिर्यावत् प्रयोग इति ॥

अथ ता एव पेया वक्तुमुपक्रमते—

**प्राग्लाजपेयां सुजरां सशुण्ठीधान्यपिप्पलीम् ॥ २६ ॥**
**ससैन्धवां तथाम्लार्थी तां पिबेत् सहडाडिमाम् ।**

सृष्टविड् बहुपित्तो वा सशुण्ठीमाक्षिकां हिमाम् ॥ २७ ॥
वस्तिपार्श्वशिरःशूली व्याघ्रीगोक्षुरसाधिताम् ।
पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ॥ २८ ॥
सिद्धां ज्वरातिसार्यम्लां पेयां दीपनपाचनीम् ।
ह्रस्वेन पञ्चमूलेन हिध्मा[1]रुक्श्वासकासवान् ॥ २९ ॥
पञ्चमूलेन महता कफार्तो यवसाधिताम् ।
विबद्धवर्चाः सयवां पिप्पल्यामलकैः शृताम् ॥ ३० ॥
यवागूं सर्पिषा भृष्टां मलदोषानुलोमनीम् ।
चविकापिप्पलीमूलद्राक्षामलकनागरैः ॥ ३१ ॥
कोष्ठे विबद्धे सरुजि, पिबेत्तु परिकर्तिनि ।
कोलवृक्षाम्लकलशीधावनीश्रीफलैः कृताम् ॥ ३२ ॥
अस्वेदनिद्रस्तृष्णार्तः सितामलकनागरैः ।
[[2]सिताबदरमृद्वीकाशारिबामुस्तचन्दनैः ॥ ३३ ॥
तृष्णाच्छर्दिपरीदाहज्वरघ्नीं क्षौद्रसंयुताम् ।]
कुर्यात् पेयौषधैरेव रसयूषादिकानपि ॥ ३४ ॥

प्राग्लाजेत्यादि ॥ प्राक् पूर्वं सर्वाभ्यः पेयाभ्यः लाजपेयां पिबेत् । नतु यवादिप्रकृतिजां पेयाम् । कीदृशीम् — सुजराम् । अल्पलाजत्वाद्यास्य शीघ्रं जरां याति ताम् । तथा सशुण्ठीधान्यपिप्पलीम् । शुण्ठ्यादिभिः शृतामिति बोध्यम् । अत एव ससैन्धवामिति पृथङ्निर्दिष्टम् । अन्यथा सशुण्ठीधान्यपिप्पलीसैन्धवामिति

---

1 हिक्कारुक्श्वासकासवानिति वा पाठः

വ്യാഘ്രീ=ചെറുവഴുതിനവേരു്. ഗോക്ഷുരം = ഞെരിഞ്ഞിൽ.
പൃശ്നിപർണ്ണി = മൂവിലവേരു്. ഉൽപലം = ചെങ്ങഴിനീർകിഴങ്ങു്.
ധാന്യകം = കൊത്തമ്പാലയരി. ചവികാ = കാട്ടുമുളകിൻവേരു്.
കോലം=ലന്തക്കുരു. വൃക്ഷാമ്ലം = മരപ്പുളി. കലശി=മൂവിലവേരു്.
ധാവനി=ഓരിലവേരു്. ശ്രീഫലം=കൂവളത്തിൻവേരു്.

2 अयं प्रक्षिप्तः श्लोकः ।

निर्देशं कुर्यात्। मुनिरप्याह—"लाजपेयां सुखजरां पिप्पलीनागरैः श्रृताम्" इत्यादि। ससैन्धवामित्यत्र सशब्दस्येषत्पर्यायत्वादल्पसैन्धवामिति बोध्यम्। तथाम्लार्थी यो ज्वर्यम्लं प्रार्थयते स तां पूर्वोक्तां पेयां सहडाडिमां पिबेत्। पूर्वस्याः पेयायाः सडाडिमत्वमेवास्या विशेषः। सोपसर्जनस्येति सहशब्दस्य सभावः। सृष्टेत्यादि। पिबेदिति वर्तते। सृष्टविड् भिन्नवर्चा ज्वरी बहुपित्तो वा सशुण्ठीमाक्षिकां हिमां पेयां पिबेत्। नोष्णाम्। यथान्यो ज्वरी। धान्यपिप्पल्यावत्रापास्यौ शुण्ठीग्रहणात्। अत्र च शुण्ठ्या द्रव्यान्तरासंयोगात् मधुरपाकत्वादग्निमान्द्योत्सारणे चोपक्षीणशक्तित्वाद्युक्तः पित्ते प्रयोगः। एवमन्यत्रापि शुण्ठ्याः प्रयोगे चिन्त्यम्। सैन्धवं तु तावन्मात्रं सर्वत्राप्यविरुद्धमेव। वस्त्यादिशूली व्याघ्रीगोक्षुरसाधितां पेयां पिबेत्। पृश्निपर्ण्यादिसाधितां पेयां दीपनपाचनीं ज्वरातिसारवानम्लां पिबेत्। दीपनी चासौ पाचनी चेति पुंवत्कर्मधारयेति पुंवद्भावः। अत्राम्लग्रहणं न कर्तव्यम्। यतः सर्वत्र पेयाप्रसङ्गे अम्लार्थी यो ज्वरी सडाडिमाम्लां पेयां पिबेदित्युक्तम्। तस्मात् किमनेन? ब्रूमः अम्लाभिलाषी भवतु वा मावा भवतु। तथाप्यम्लामेव ज्वरातिसारवान् पिबेदित्यस्यार्थस्य द्योतनार्थमम्लामित्युक्तम्। ह्रस्वेनेत्यादि। पिबेत् सिद्धामित्यनुवर्तते। ह्रस्वेन बृहत्यादिना पञ्चमूलेन सिद्धां पेयां हिध्मादिमान् पिबेत्। कफार्तो नरो महता विल्वादिना पञ्चमूलेन सह यवसाधितां पेयां पिबेत्। तण्डुला एवात्र प्रकृतित्वेन योज्याः। यवास्तु क्काथ एव। विबद्धं विष्टब्धं वर्चः पुरीषं यस्य सः। सयवां यवप्रधानां पेयां पिबेत्। किंभूताम्—पिप्पल्यामलकैः श्रृताम्। तथा सर्पिषा भृष्टां सम्यगाज्येन संस्कृताम्। तथा मलः पुरीषादिः। दोषो वातादिः। तेषामनुलोमनीं स्वमार्गप्रवर्तिनीम्। चविकेत्यादि। कोष्ठे विबद्धे विबद्धदोषाधिष्ठाने तथा सरुजि चविकादिभिः साधितां पेयां पिबेत्। तुः पुनरर्थे। परिकर्तनं छेदनमिवानुभवः। स यस्यास्ति तस्मिन् परिकर्तिनि तु कोष्ठे कोलादिभिः साधितां पेयां पिबेत्। श्रीफलं विल्वफलम्। अस्वेदनिद्रो नरस्तृष्णार्तः सितादिभिः साधितां पेयां पिबेत्। पेयोद्दिष्टैरौषधैर्मांसरसादयो यथायोगं कर्तव्याः। तथा च सङ्ग्रहे व्याचष्ट—"कुर्यात्पेयौषधैरेव रसयूषादिकानपि"। रसोऽत्र मांसरसः। यूषो मुद्गादिसंबन्धी क्काथः। आदिग्रहणात् पानीयमस्तुतक्रव्यञ्जनादयो गृह्यन्ते। पेयादिषु च द्रव्यपरिमाणादिकं पूर्वोक्तं सूदशास्त्रादिभ्यो वावगन्तव्यम्। तथा च तन्त्रान्तरे—

"पेया यूषरसाद्येषु रसालापानकादिषु ।
द्रव्यमात्रां प्रयुञ्जीत लोकसिद्धां यथार्हतः ॥" इति ।

यस्य पुंसो यत्परिमाणैर्द्रव्यैर्मात्रा योग्या, तस्य तत्परिमाणैरेव पेयादयः कार्या इत्यर्थः । अन्ये त्वेवं मन्यन्ते—"पेयायूषरसाद्येषु द्रव्यपरिमाणमल्पमेव कल्पयितव्यम् । पानार्थे यद्द्रव्यसाधितं तोयमुक्तं, तदप्यल्पपरिमाणद्रव्येणैव साधनीयम् । अल्पपरिमाणद्रव्येणैव तत्तोयं सम्यक् पाच्यते" । तथा च खरणादेऽवादीत् —"बहुद्रव्यो घनः क्वाथः स्वच्छमल्पौषधं जलम् " इति । श्रपणक्रियासामान्येऽप्यस्योभयस्य पृथक् संज्ञाविनिर्देशो द्रव्यपरिमाणभेदादयं क्वाथ इदं जलमिति । ज्वरिणां च प्रथमं यथाऽच्छाः पेया देयास्तथा यूषरसा अप्यच्छाः एव देयाः, अग्निमान्द्यभयात् । क्वाथोऽप्यत एव बहुपरिमाणद्रव्यसध्यत्वात घनतया तिक्तरसद्रव्यकृतोऽपि प्रथमं ज्वरे निषिद्धः ॥

शशिलेखा

[1]यदा पेयानामवसरस्तदा मण्डादनु सुजरत्वाल्लाजपेयां पिबेत् । ततस्तण्डुलपेयां सैन्धवलाजपेयां वा । अम्लार्थिग्रहणेन "कुर्वते हि रुचिं दोषाः ।" इति स्मार्यते । नत्वर्थितामात्रे प्रयोगः । सर्वासां च पेयानां साधनजलसंस्कारकारी दोषाद्यपेक्षा चौषधमात्रा । अन्ये पठन्ति—

"यवागूरसयूषेषु रसालापानकादिषु ।
द्रव्यमात्रां प्रयुञ्जीत लोकसिद्धां यथार्हतः ॥
अथवा यावता व्याप्तिर्नाति स्यात् भेषजेन तु" इति । सुबोधम् ॥

—यवसाधितां यस्यां तण्डुला न प्रविशन्ति । सयवा यत्र स्तोकं यवानाम् । परिकर्तिनि कोष्ठे कोलादिभिः । श्रीफलं विल्वम् ॥

---

1 प्राग्लाजपेयां सुजरामिति श्लेष्मण्येषा प्रथमा । अम्लाभिलाषी तामेव डाडिमाम्लामित्येषा वाते द्वितीया । सृष्टविड् बहुपित्तो वेत्येषा तृतीया-पित्ते । अत्र नागरं मधुरपाकित्वात् पित्ते न विरुध्यते । आमपाचनार्थमिष्यत एव । शेषाणां विषयनिर्देशस्तु शास्त्रस्य कर्त्रा कृत एव । इति जर्जटः ॥

किं सर्वत्र ज्वरे सर्वस्मै सर्वदा सर्वस्मिन् दोषे पेया देया, इत्याशङ्क्य नेत्याह—

मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे ।
ग्रीष्मे तयोर्वाधिकयोस्तृट्छर्दिदाहपीडिते ॥ ३५ ॥
ऊर्ध्वं प्रवृत्ते रक्ते च पेयां नेच्छन्ति—

सर्वाङ्गसुन्दरी

**मद्योद्भव इत्यादि ॥** मद्योद्भव इत्यादिषु पेयां नेच्छन्ति । मुनय इति शेषः । मद्येनोद्भवति यस्तस्मिन् मद्योद्भवे ज्वरे । तथा मद्यनित्ये पुरुषे । तथा कफे पित्तस्थानगते सति । तथा ग्रीष्मे काले । तथा तयोर्वाधिकयोः । तयोरिति पित्तकफौ परामृश्येते । पित्तकफयोश्चाधिकयोः । पित्तस्थानगते कफ इत्यतस्तयोरेव प्रकृतत्वात् । तथा तृट्छर्दिदाहैः समुदितैः पीडिते पुरुषे यो ज्वरस्तस्मिंश्च । प्रत्येकं तु तृडार्तेऽनुज्ञातैव, "अस्वेदनिद्रस्तृष्णार्तः" इत्युक्तेः । दाहार्तेऽपि सृष्टविड् बहुपित्तो वेत्याह । तथा यस्योर्ध्वं प्रवृत्ते रक्ते ज्वरस्तस्मिंश्च पेयां नेच्छन्ति ॥

शशिलेखा

मद्योद्भवादिके विषये पेयामाचार्या नेच्छन्ति । मद्यनित्ये पुरुषे तयोरित्यनन्तरश्रुतयोः पित्तश्लेष्मणोः ग्रीष्मकाले वृद्धयोः । वेति समुच्चये । नेच्छन्तीत्यनेनानुपयुज्यमाने युक्तिविशेषतैवागमस्य प्रदर्शिता ॥

तेषु तर्हि किं कार्यमित्याह—

तेषु तु ।
[1]ज्वरापहैः फलरसैरद्भिर्वा लाजतर्पणम् ॥ ३६ ॥
पिबेत्सशर्कराक्षौद्रं ततो जीर्णे च तर्पणे ।
यवाग्वां वोदनं क्षुद्वानश्नीयात् भृष्टतण्डुलम् ॥ ३७ ॥
दकलावणिकैर्यूषै रसैर्वा मुद्गलावजैः ।

---

1 "द्राक्षादाडिमकाश्मर्यपथ्यापीलुपरूषकैः ।
समधूकैस्सबदरैस्सक्षौद्रान् ससितोपलान् ॥
ज्वरघ्नैस्तोयमृदितैरद्भिर्वा लाजतर्पणान्" इति सङ्ग्रहे ॥



सर्वाङ्गसुन्दरी

**तेष्वित्यादि ॥** तेषु पुनर्विषयभूतेषु लाजतर्पणं लाजसक्तून् पिबेत्। पेयावसरे न तु यवसक्तून् पिबेत्। ज्वरापहैः फलरसैः द्राक्षादीनां ज्वरघ्नानां फलानां रसैः स्वरसैः, अथवा तद्रसैः क्वाथैः, अथवाद्भिर्जलैः। क्वथितशीतलैरित्यर्थाद्गम्यते। किम्भूतान् लाजसक्तून्—सशर्कराक्षौद्रान्। ततस्तर्पणानन्तरं, तर्पणे जीर्णे यवाग्वां वेति। यवागूपानार्हे तु नरे यवाग्वां जीर्णायां क्षुद्वान् पुरुषः सञ्जातबुभुक्षः सन् द्वितीयेऽन्नकाले ओदनमश्नीयात्। किम्भूतम्—भृष्टास्तण्डुला यस्मिन् तत्। किं केवलमोदनं भुञ्जीत, नेत्याह—दकेत्यादि—दकलावणिकैः कुलत्थादीनां सम्बन्धिभिर्यूषैः क्वाथैरोदनमद्यात्। अथवाऽवस्थावशान्मुद्गलावजैः रसैरोदनमद्यात्। मुद्गलावजरसैरिति वक्तव्ये रसैरिति पृथङ्निर्देशो लावजरसानां प्राधान्यख्यापनार्थम्। तथा लावजरसाः संस्कार्याः। संस्कारकाश्च मुद्गाः। अत एव बहुमात्राणां लावानामल्पानां च मुद्गानामत्रोपयोगः कार्य इत्यवतिष्ठते। "नातिमांसास्तनुरसा दकलावणिकाः स्मृताः" इति केचिदाहुः। अन्ये त्वाचक्षते, "अल्पमांसपटुस्नेहाः दकलावणिकाः स्मृताः" इति ॥

शशिलेखा

तेषु[1] तु मद्योद्भवादिषु पेयाप्रसङ्गे लाजतर्पणान् पिबेत्। तर्पणाः सक्तवः। केन पिबेदित्याह—ज्वरापहैः फलरसैः द्राक्षादाडिमादीनां सङ्ग्रहोक्तानां फलानां रसैस्तोयमृदितैर्यथायोग्यमथवा केवलाभिरद्भिः। किंभूतानाह—सशर्करा क्षौद्रान्। ततस्तदहरेव तर्पणे जीर्णे यवाग्वां वा स्वविषयप्रयुक्तायां तदहरेव जीर्णायां यदा क्षुद्वान् भवति तदा भृष्टतण्डुलकृतमोदनमद्यात्। केनेत्याह—दकलावणिकैर्यूषैर्वा मुद्गलावाभ्यां वा रसैः ॥

**इत्ययं षडहो नेयो बलं दोषं च रक्षता ॥ ३८ ॥**

सर्वाङ्गसुन्दरी

**इतीत्यादि ॥** इति पूर्वोक्तेन प्रकारेणाऽयं प्रथमो ज्वरस्य षडहो नेयोऽतिवाह्यः ॥ नान्यो ज्वरस्य संबन्धीत्ययमिति निर्देशाल्लभ्यते। किं कुर्वता

1 "ज्वरापहैः..........लाजतर्पणान्" इति पाठः इन्दुनाङ्गीकृतः।

भिषजा षडहो नेयः। बलं रक्षता। तथा दोषं तत्काले सामं वाताद्यन्यतमं पृथक् संसृष्टं सन्निपतितं वा ज्वरकारणं रक्षता तद्रक्षां कुर्वता। यथाऽसौ दोषः कृच्छ्रसाध्यतामसाध्यतां वा न याति। अत्र च यदि बलरक्षणार्थं सन्तर्पणं क्रियते तदा सन्तर्पणस्यामवृद्धिहेतुत्वात्सामो दोषो वर्धेत। अथामदोषक्षपणार्थमपतर्पणं कुर्वीत तदा बलहानिः स्यात्। तस्मान्मध्यमया वृत्त्याऽवहितेन वैद्येनोभयं रक्षतोऽपक्रमः कार्यः॥

शशिलेखा

इत्यनेन पेयादिक्रमेणायं लङ्घितोत्तरषडह आतुरेण बलं देहस्य दोषं च क्षयवृद्धितो रक्षता नेयः इति॥

**ततः पक्वेषु दोषेषु लङ्घनाद्यैः प्रशस्यते।**
**कषायो दोषशेषस्य पाचनः शमनोऽथवा ॥ ३९ ॥**

सर्वाङ्गसुन्दरी

**तत इत्यादि॥** लङ्घनाद्यैस्तिक्तरसावसानैः तत्कालोचितैर्ज्वरकारिसाममलपक्तिहेतुभिः पक्वेषु दोषेषु ततः षडहादूर्ध्वं कषायः प्रशस्यते। मुस्तापर्पटकादिः पाचनः। प्राधान्येन पाचनसंज्ञया विहितत्वात्। तथा वक्ष्यमाणः कलिङ्गादिरर्धश्लोकसमापनः पञ्चप्रकारः शमनः प्रशस्यते। प्राधान्येन शमनसंज्ञया विहितत्वात्। तथा चाध्येष्यते तन्त्रकृत्—"पञ्चैते सन्ततादीनां पञ्चानां शमना मता" इति। तदेतदुभयं पाचनशब्दश्रुत्याऽक्षिप्तो मुस्तापर्पटकादिः शमनशब्दश्रुत्याक्षिप्तः कलिङ्गकादिः कषायः क्वाथः प्रशस्यते। कस्य पाचन इत्याह—दोषशेषस्य। अत एव च पक्वेषु दोषेषु लंघनाद्यैरित्यल्पपक्वेषु पक्वप्रायेष्वीषदामेषु दोषेष्विति बोध्यम्। अन्यथा पक्वस्य पाचनमयुक्तमिव स्यात्। पिष्टपेषणन्यायेनानर्थकत्वात्। तथाचापक्वं यद्वस्तुजातं तदग्निः पचति। अपचन्तमग्निं पाचनः पाचयतीत्येवं च पाच्याभावात् किमग्निः पचतु किं वा कषायः पाचयत्वित्यनुपपन्नमेवैतत् स्यात्। यदा पुनर्मुस्तापर्पटकादिः कलिङ्गकादिरन्यो वा कश्चित् कषायः तिक्ताद्यन्यतमो वा वातादिदोषज्वरशान्त्यर्थं प्रयुज्यते, तदा पाचनो भवन्नपि शमनसंज्ञो न पाचनसंज्ञः। ननु प्रथम एव दिने तिक्तरसकषायमनुजज्ञे तन्त्रकृत्।

तथा चावोचत्। "घनचन्दनशुण्ठ्यम्बुपर्पटोशीरसाधितम्" इत्यादि। तत्कथमेतत्, अत्रोच्यते। ज्वरिणः प्रसक्ततृषोऽवश्यं पानं किंचिद्वितरणीयम्। मद्येक्षुरसदधिमस्त्वारनालक्षीरादीनामत्र योग्यत्वेऽपि नवज्वरेष्वेवंविधानि निषिद्धानि तन्त्रकृद्भिः शिशिरजलमप्यामदोषस्रोतःसंरोधाग्निमान्द्यादीनावहेत् ज्वरं गाढतरं कुर्यात्। तस्मात् पानार्थे तिक्तरससाधितमुदकमनुमेने। द्रव्याणि चात्र स्वल्पमात्रयैव योज्यानीत्यनन्तरमेव प्रत्यपादि। किं च ज्वरितस्तृषितो जलं बह्वौषधं पातुमपि न क्षमते। किञ्च कतिपयान्येव घनादीनि जलसंस्कारेण पातुमनुमतानि, न सकलान्यपि तिक्तान्यनुमतानि। किं तर्हि? विशिष्टप्रभावात् घनादीन्येव। विशिष्टप्रभावत्वं चान्यत्रापि द्रव्याणां दृष्टम्। यथा शमीफलं मधुरमपि केशघ्नं, तथाम्लमप्यामलकं पित्तकफघ्नं, सैन्धवं लवणमपि चक्षुष्यमित्याद्यन्यदप्यूह्यम्। तस्मात् घनादीनां पानीयसंस्कारतयोऽपयोगो नवज्वरेऽपि हितः॥

शशिलेखा

[1]ततः पेयाक्रमादनन्तरं लङ्घनस्वेदनकालयवागूभिर्दोषेषु ज्वरारम्भकेषु पक्केषु दोषशेषस्य पाचनो वा शमनो वा कषायः पञ्चविधकल्पनः प्रशस्यते। कषाय इति पाकेनोपलब्धत्वादौषधस्य संज्ञा इति॥

**तिक्तः पित्ते विशेषेण प्रयोज्यः कटुकः कफे।**
**पित्तश्लेष्महरत्वेऽपि कषायः स न शस्यते ॥ ४० ॥**
**नवज्वरे मलस्तम्भात् कषायो विषमज्वरम्[2]।**
**कुरुतेऽरुचिहृल्लासहिध्माध्मानादिकानपि ॥ ४१ ॥**

---

1 "लङ्घनाम्बुयवागूभिर्यदा दोषो न पच्यते।
तदा तं मुखवैरस्यतृष्णारोचकनाशनैः॥
कषायैः पाचनैर्हृद्यैर्ज्वरघ्नैः समुपाचरेत्।"
पाचनीयविषयोयम्। संशमनीयविषयश्च—
"मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च।
पक्कं दोषं विजानीयाद्यदा देयं तदौषधम्॥"
तस्मात्संशमनीयकालोऽयमिति॥ जर्जटः



2 "विषमज्वरान्" इति वा पाठः। (इन्दुः)

मौषधं मुस्तापर्पटकादिकं योज्यमित्याहुः । केचिदाचार्या लध्वन्नभुक्तस्य नरस्यौषधं योज्यमित्याहुः । लध्वन्नशब्देन पेयादिकं भण्यते । ओदनतस्तस्य लघुत्वोक्तेः । लध्वन्नं भुक्तं येनासौ लध्वन्नभुक्तः । आहिताग्न्यादित्वान्निष्ठान्तस्य परनिपातः । परमतमप्रतिषिद्धमनुमतमेवेति सर्वमेतत् प्रमाणमवस्थावशेन प्रयोगार्हत्वात् । आमोल्बणे तु न । आमाधिकज्वरिणि पुरुषे पुनरौषधं ज्वरघ्नं मुस्तापर्पटकादिकं षडहादूर्ध्वं सप्ताहात् दशाहाद्वा न योज्यम् ॥

### शशिलेखा

केचिदाचार्याः सप्ताहादौषधमाहुः । अन्ये तु दशाहात् । केचित्त्वेवमाहुः । यथा—"लङ्घनादनन्तरं यदाऔषधमुपयुज्यते तदा येन लध्वन्नं भुक्तं तस्यैव योज्यम् । पक्षत्रयेऽपि समानं योज्यम्, आमोल्बणे त्वौषधं नेति । केवलं केषाञ्चित् षडहमामोल्बणत्वं, केषाञ्चित् सप्ताहं, केषाञ्चित् दशाहमिति । आमोल्बणे न योज्यमित्यत्र हेतुरुच्यते ॥

किमिति चेदाह—

**तीव्रज्वरपरीतस्य दोषवेगोदये यतः ।**
**दोषेऽथवाऽतिनिचिते तन्द्रास्तैमित्यकारिणि ॥ ४३ ॥**
**अपच्यमानं भैषज्यं भूयो ज्वलयति ज्वरम् ।**

### सर्वाङ्गसुन्दरी

**तीव्रेत्यादि ॥** तीव्रज्वरेण परीतस्य ज्वरिणः पुंसो दोषवेगोदये, दोषस्यामाख्यस्योल्बणस्य वेगो मुस्तापर्पटकादिनोत्क्लेशाद्दोषवेगस्तस्योदयः प्रादुर्भावो दोषवेगोदयः, अथवोल्बणामस्य वातादेर्दोषस्य वेगोदयस्तस्मिन् दोषवेगोदये सति । अथवा तथैव दोष आमाख्येऽतिनिचितेऽतिशयेन सञ्चयं प्राप्ते वातादौ वा दोष उल्बणे । अत एव तन्द्रास्तैमित्येऽवश्यं करोति तस्मिंस्तन्द्रास्तैमित्यकारिणि यतो यस्मात्तदानीमामछन्नतया पावकेनापच्यमानं भैषज्यमौषधं मुस्तापर्पटकादि शृतादिकल्पनाकल्पितं तदौषधं प्रयुक्तं भूयः पुनरपि ज्वरं ज्वलयत्युत्तेजयति न शमयति, तस्मादामोल्बणे ज्वरे न षडहादूर्ध्वं नापि सप्ताहान्न च दशाहादूर्ध्वं भैषज्यं योज्यम् ॥

शशिलेखा

यतो यस्मात्तीव्रज्वरपरीतस्य दोषवेगोदये सति प्रयुक्तमौषधमत एवापच्यमानं भूयो ज्वरं ज्वलयति। अथवा नवज्वरेऽतिनिचिते दोषे तन्द्रास्तैमित्यकारिणि औषधं प्रयुक्तं भूयो ज्वरं ज्वलयतीति ॥

कदा तर्हि योज्यमित्याह—

**मृदुर्ज्वरो लघुर्देहश्चलिताश्च मला यदा ॥ ४४ ॥**
**अचिरज्वरितस्याऽपि भैषज्यं योजयेत्तदा।**

सर्वाङ्गसुन्दरी

**मृदुरित्यादि** ॥ मृदुज्वरः उपद्रवस्य मृदुतया। लघुः पटुर्देहः। चलिताश्च मलाः मूत्रपुरीषादयः। मृदुर्ज्वर इत्यादिलक्षणावस्था यदा भवति तदास्यामवस्थायामचिरज्वरितस्यापि अनतिक्रान्तषडहस्यापि भैषज्यं योज्यम्। अपिशब्दात्किंपुनः षडहेतीते ज्वरितस्यैवंलक्षणायामवस्थायामुत्पन्नायां तदौषधं न योज्यमित्येवं व्याध्यवस्था कालतो गरीयसीत्युक्तं भवति ॥

शशिलेखा

यदा मृदुर्ज्वरो देहश्च लघुर्मलाश्चलिता नतु स्तिमितास्तदा अचिरज्वरितस्यापि भैषज्यं योजयेत्। तेनैतदुक्तम्—यद्यपि पक्षत्रयं प्रदर्शितं तत्राऽप्येवमेवावगन्तव्यम्। यस्य ज्वरस्य तीव्रत्वं प्राप्तस्य च लङ्घनस्यायोजनाद्दोषस्यातिवृद्धत्वं सामत्वं च तत्रावश्यमौषधं न योज्यम्। एतद्विपर्यये तु योज्यमेव। न तु षडहादिकमपेक्षणीयमिति ॥

अथ तदौषधमाह—

**मुस्तया पर्पटं युक्तं शुण्ठ्या दुस्पर्शयाऽपि वा ॥ ४५ ॥**
**पाक्यं शीतकषायं वा पाठोशीरं सवालकम्।**

---

ദുസ്പർശം=പുത്തരിച്ചുണ്ടയ്ക്ക

पिबेत्तद्वच्च भूनिम्बगुडूचीमुस्तनागरम् ॥ ४६ ॥
[1]यथायोगमिमे योज्याः कषाया दोषपाचनाः ।
[2]ज्वरारोचकतृष्णास्यवैरस्यापक्तिनाशनाः ॥ ४७ ॥

सर्वाङ्गसुन्दरी

मुस्तेत्यादि ॥ मुस्तया सह पर्पटं युक्तम्, अथवा शुण्ठ्या युक्तम्, अथवा धन्वयाषेण युक्तं, पाक्यं शृतं शीतकषायं शीतकल्पनाकल्पितं वा कृत्वा पिबेदिति वक्ष्यमाणेन संबन्धः । पाठा चोशीरं च पाठोशीरम् । वालकेन सह शृतं शीतं शीतकषायं वा पिबेत् । स्वरसकल्कफाण्टाख्यकल्पनाभ्यः शृतशीताख्यकल्पनाद्वयकल्पितस्यास्य तथा सामर्थ्यस्य दृष्टत्वादेतत्कल्पनायुगलमुपन्यस्तवान् । वा समुच्चये भिन्नक्रमः । तद्वदित्यादि । न केवलं मुस्तापर्पटकं पिबेत्, तथा पाठोशीरं सवालकं पिबेत् यावत् भूनिम्बगुडूचीमुस्तनागरमपि तद्वत् शृतं वा शीतं वा पिबेदिति । यथेत्यादि । इमे पूर्वोक्ताः मुस्तापर्पटकादयः कषाया यथायोगं योगानतिक्रमेण । यो यः कषायो यस्मिन् यस्मिन् ज्वरे दातुं युक्तः, स तत्र योज्य इति यथायोगं प्रयोज्याः । किंक्रिया एते स्युरित्याह—दोषपाचनाः दोषस्यामाख्यस्य पक्वप्रायस्य पाचनाः । तन्त्रान्तरे चोक्तम्—

"प्रयुक्तं पाचयेदामं यत्तत् पाचनमुच्यते ।
पित्तादिजिन्निरामस्य यत्स्यात्तच्छमनं मतम् ॥ इति ।

---

1 यथायोगमित्यत्र जज्जटः—पाक्यं शीतकषायं वा मुस्तापर्पटकं पिबेत् । पाक्यं क्वाथ्यम् । शीतकषायमनुत्क्वथितमेवोष्णोदके संक्षुद्य द्रव्यं यत् रात्रिपर्युषितं पीयते तत् केवलपित्ते । पैत्तिके च सनागरं पर्पटकं मन्दाग्निः । पित्तकफप्राये सदुरालभं पर्पटकम् । दुरालभा पित्तश्लेष्मोपशमनानामित्याम्नानात् । दाहबहुले पाठोशीरं सवालकम् । शीतप्राये भूनिम्बगुडूचीमुस्तनागरमिति । अन्ये तु व्याख्यानयन्ति—पञ्चाऽप्यमी सर्वयौगिकाः । कुतः ? व्याधिप्रत्यनीकत्वात् । यथा कुष्ठे खदिरं, ग्रहण्यां तक्रं, प्रमेहे हरिद्रेति ।

2 "पाठेन्द्रयवभूनिम्बमुस्तपर्पटकामृताः ।
जयन्त्याममतीसारं ज्वरं च समहौषधाः ॥"
इति चश्लोकः सङ्ग्रहे दृष्टः ॥



अत्र मुस्तापर्पटकस्य पूर्वमुपन्यासो ज्वरनाशनेभ्योऽन्येभ्योऽस्य मुस्तापर्पटकस्य ज्यायस्त्वप्रदर्शनार्थः। तथाचाचार्योऽग्र्याणां मध्ये "मुस्तापर्पटकं ज्वरे" इति निर्देक्ष्यति। तस्मान्मुस्तापर्पटकस्यैव ज्वरनाशने ज्यायस्त्वमित्यवेहि, व्याधिप्रतिपक्षत्वात् ॥

शशिलेखा

मुस्तयेत्यादिना तदेवौषधमुच्यते। एवं दोषादिविशेषापेक्षया पर्पटं कदाचिन्मुस्तया युक्तं, कदाचिच्छुण्ठ्या, कदाचिद्दुरालभया। पाठादित्रयं शृतं वा शीतं वा। भूनिम्बादिचतुष्टयं तद्वत् शृतं वा शीतं वा। इमे च मुस्तापर्पटकादयः कषाया नियतानियतकल्पना यथायोगं दोषाद्यपेक्षया योगानतिक्रमेण योज्याः। एते च ज्वरादिनाशना इति ॥

**कलिङ्गकाः[1] पटोलस्य पत्रं कटुकरोहिणी ॥ ४८ ॥**
**पटोलं शारिबा मुस्ता पाठा कटुकरोहिणी।**
**पटोलनिम्बत्रिफलामृद्वीकामुस्तवत्सकाः ॥ ४९ ॥**
**किराततिक्तममृता चन्दनं विश्वभेषजम्।**
**धात्रीमुस्तामृताक्षौद्रमधश्लोकसमापनाः ॥ ५० ॥**
**पञ्चैते सन्ततादीनां पञ्चानां शमना मताः।**

सर्वाङ्गसुन्दरी

**कलिङ्गका इति ॥** कलिङ्गकादयोऽर्धश्लोकेन समापनं येषां ते अर्धश्लोकसमापनाः। पञ्चैते पञ्चानां सन्ततादीनां यथासंख्यं शमना मताः। मुनीनामिति शेषः ॥

शशिलेखा

कलिङ्गकादिभिः पञ्चभिरर्धश्लोकैः पञ्च यथायोगकल्पनाः। एते कषायाः यथासंख्येन पञ्चानां सन्ततादीनां शमनाः मताः आचार्याणामिति ॥

---

1 കലിംഗകം=കടകപ്പാലയരി. (വത്സകം) കിരാതതിക്തം=പുത്തരിച്ചുണ്ടവേര്.

दुरालभामृतामुस्तानागरं वातजे ज्वरे ॥ ५१ ॥
अथवा पिप्पलीमूलगुडूचीविश्वभेषजम् ।
कनीयः पञ्चमूलं च, पित्ते शक्रयवा घनम् ॥ ५२ ॥
कटुका चेति सक्षौद्रं मुस्तापर्पटकं तथा ।
सधन्वयाषभूनिम्बं, वत्सकाद्यो गणः कफे ॥ ५३ ॥
अथवा वृषगाङ्गेयीशृङ्गिबेरदुरालभाः ।
रुग्विबन्धानिलश्लेष्मयुक्ते दीपनपाचनम् ॥ ५४ ॥
अभयापिप्पलीमूलशम्याककटुकाघनम् ।

सर्वाङ्गसुन्दरी

दुरालभेत्यादि ॥ दुरालभादि पाचनं वातजे ज्वरे। अथवा पिप्पल्यादिकं वातजे ज्वरे। कनीयो बृहत्यादिकं पञ्चमूलं वातजे ज्वरे। इति योज्यम्। पित्ते पित्तजे ज्वरे शक्रयवादयः समाक्षिका मताः। तथा पित्तजे मुस्तापर्पटकं धन्वयाषकिराततिक्तकाभ्यां सहितं हितम्। "वत्सकमूर्वाभार्ङ्गी"त्यादिः कफे मतः। अथवा वृषादिः। गाङ्गेयी मुस्ता। रुग्विबन्धादियुक्ते ज्वरे अभयादिघनावसानं दीपनपाचनम् ॥

शशिलेखा

दुरालभादिकं वातज्वरे। पिप्पलीमूलादित्रयं वातज्वर एव। केवलमेव ह्रस्वपञ्चमूलकं वाते। कलिङ्गकादित्रयं सक्षौद्रं पित्ते। मुस्तापर्पटकं दुरालभा-किराततिक्तसंयुक्तं पित्ते। कफे वत्सकाद्यो गणः। अथवा वृषादयः। रुगादियुक्ते वातश्लेष्मज्वरे अभयादिकम्। तच्च दीपनं पाचनं च इति ॥

द्राक्षामधूकमधुकलोध्रकाश्मर्यशारिवाः ॥ ५५ ॥
मुस्तामलकह्रीबेरपद्मकेसरपद्मकम् ।
मृणालचन्दनोशीरनीलोत्पलपरूषकम् ॥ ५६ ॥
फाण्टो हिमो वा द्राक्षादिर्जातीकुसुमवासितः ।
युक्तो मधुसितालाजैर्जयत्यनिलपित्तजम् ॥ ५७ ॥

ज्वरं मदात्ययं छर्दिं मूर्च्छां दाहं श्रमं भ्रमम् ।
ऊर्ध्वगं रक्तपित्तं च पिपासां कामिलामपि    ॥ ५८ ॥

सर्वाङ्गसुन्दरी

**द्राक्षेत्यादि** ॥ द्राक्षादिरयं गणः फाण्टः "सद्योभिषुतपूत" इत्येवंलक्षणस्तथा हिमः शीतो वा "रात्रिंद्रवे स्थितः" इत्येवंलक्षणस्तथा जातीकुसुमैः सुगन्धीकृतो मधुसितालाजैर्युक्तो वातपित्तज्वरं जयति। मदात्ययादींश्च ॥

शशिलेखा

द्राक्षामधूकादिना सार्धेन श्लोकेन फाण्टः शीतकषायो वा मध्वादिभिर्युक्तो जातीपुष्पाधिवासितश्चानिलपित्तज्वरमदात्ययादिकं जयति। ह्रीबेरं वालकमिति ॥

पाचयेत्कटुकां पिष्ट्वा कर्परेऽभिनवे शुचौ ।
निष्पीडितो घृतयुतस्तद्रसो ज्वरदाहजित्    ॥ ५९ ॥

सर्वाङ्गसुन्दरी

**पाचयेदित्यादि** ॥ कटुकां पानीयेन पिष्ट्वा कर्परे मृद्घटखण्डेऽभिनवे तथा शुचौ पाचयेत्। तस्या रसो निष्पीडितः सर्पिर्युक्तो ज्वरदाहौ जयति ॥

कफवाते वचातिक्तापाठारग्वधवत्सकाः ।
पिप्पलीचूर्णयुक्तो वा क्वाथः छिन्नोद्भवोद्भवः    ॥ ६० ॥
व्याघ्रीशुण्ठ्यमृताक्वाथः पिप्पलीचूर्णसंयुतः ।
वातश्लेष्मज्वरश्वासकासपीनसशूलजित्    ॥ ६१ ॥
पथ्याकुस्तुम्बरीमुस्ताशुण्ठीकर्तृणपर्पटम्[1] ।
सकट्फलवचाभार्ङ्गीदेवाह्वं मधु[2]हिङ्गुमत्    ॥ ६२ ॥

---

1 കർത്തൃണം (തിക്ത)=പുത്തരിച്ചുണ്ടവേര്. പിപ്പലീചൂർണ്ണം=കാട്ടുതിപ്പലിവേരിൻചൂർണ്ണം. (ഇന്ദു)

2 "मधु कर्षप्रमाणम्। हिङ्गु माषकप्रमाणम्। माषके हिङ्गु सिन्धूत्थे इति वचनात्" इति सुश्रुते डल्हणः ॥

कफवातज्वरष्ठेवकुक्षिहृत्पार्श्ववेदनाः ।
कण्ठामयास्यश्वयथुश्वासकासान्नियच्छति ॥ ६४ ॥

सर्वाङ्गसुन्दरी

**कफवात इत्यादि ॥** वातश्लेष्मणि कषायकल्पनया कल्पिता वचादयोऽभिमताः । अथवा छिन्नोद्भवोद्भवः क्वाथः पिप्पलीचूर्णयुतो मतः । व्याघ्र्यादिक्वाथः कणाचूर्णसंयुक्तो वातश्लेष्मज्वरादिजित् । पथ्यादि पाचनं सिद्धपूतं मधुहिङ्गुभ्यां द्विशाणमाषमाभ्यां संयुक्तं कफवातज्वरष्ठेवादीन् पराकरोति ॥

शशिलेखा

वचादयः समस्ताः कफवातज्वरे । तत्रैव गुडूचीक्वाथः पिप्पलीमूलचूर्णेन दोषाद्यपेक्षमात्रेण युक्तः । व्याघ्र्यादिक्वाथस्तद्वद्वातश्लेष्मज्वरादिजित् । शूलं शिरसि । पथ्यादिको माक्षिकहिङ्गुयुक्तः कफवातज्वरादिकं नियच्छति इति ॥

आरग्वधादिः सक्षौद्रः कफपित्तज्वरं जयेत् ।
तथा तिक्तावृषोशीरत्रायन्तीत्रिफलाऽमृताः ॥ ६५ ॥
पटोलातिविषानिम्बमूर्वाधन्वयवासकाः ।

सर्वाङ्गसुन्दरी

**आरग्वधादिरिति ॥** आरग्वधादिर्माक्षिकसहितः कफपित्तज्वरं जयति । तथा तिक्तादयो धन्वयवासान्ताः कफपित्तज्वरं घ्नन्ति ॥

शशिलेखा

आरग्वधादिगणो माक्षिकयुक्तः कफपित्तज्वरे । तिक्तादिधन्वयवासान्तं तथा सक्षौद्रमेवेत्यर्थ इति ॥

सन्निपातज्वरे व्याघ्रीदेवदारुनिशाघनम् ॥ ६६ ॥
पटोलपत्रनिम्बत्वक्त्रिफलाकटुकायुतम् ।
नागरं पौष्करं मूलं गुडूची कण्टकारिका ॥ ६७ ॥
सकासश्वासपार्श्वार्तौ वातश्लेष्मोत्तरे ज्वरे ।
मधूकपुष्पमृद्वीकात्रायमाणापरूषकम् ॥ ६८ ॥

सोशीरतिक्तात्रिफलाकाश्मर्यं कल्पयेद्धिमम् ।
कषायं तं पिबन्काले ज्वरान्सर्वानपोहति ॥ ६९ ॥
जात्यामलकमुस्तानि तद्वद्धन्वयवासकम् ।
बद्धविट् कटुकाद्राक्षात्रायन्तीत्रिफलागुडम् ॥ ७० ॥

सर्वाङ्गसुन्दरी

सन्निपातज्वर इत्यादि ॥ सन्निपातज्वरे व्याघ्र्यादि कटुकान्तं पाचनम् । नागरादि पाचनं वातश्लेष्माधिके कासाद्यार्तिमति । मधूकपुष्पादिकं काले शास्त्रोक्ते शीतकषायं पिबन् ज्वरान्सर्वानेकदोषद्विदोषत्रिदोषजानपोहति । "उपसर्गादस्यत्यूह्योर्वावचनम्" इति परस्मैपदम् । जातीपल्लवाः आमलकानि मुस्तं धन्वयवासकं तद्वत्पूर्ववच्छीतकषायं कल्पयित्वा पिबन्सर्वान् ज्वरान् हन्ति । धन्वयवासकं चेति चशब्दोऽत्र लुप्तनिर्दिष्टः । तदेतैश्चतुर्भिर्द्रव्यैरेतत्पाचनम् । केचिद्धन्वयवासकं पृथगेवेच्छन्ति । तस्मादेतत्कृतोपि कषायः पूर्ववद्बोध्यः । तथा बद्धविट् पुरुषः कटुकादिकं कषायं पिबेदिति वर्तते, नतु हिममिति, शीतस्य मलस्तम्भहेतुत्वादस्य च शोधनरूपत्वात् । गुडा सुधा । गुल इत्यन्ये ॥

शशिलेखा

सन्निपातज्वरे व्याघ्र्यादिकटुकान्तः । नागरादि वातश्लेष्मोत्तरे हीनपित्ते सन्निपाते । मधूकादि शीतकषायं विकल्प्य कस्मिंश्चित्काले ज्वरे प्रयुक्तं सर्वज्वरहरम् । तद्वदेव जात्यादि । तद्वत् दुरालभा । यस्तु ज्वरी बद्धविट् तद्विषये कटुकादीन्पिबेत् । इति कषायाः ॥

जीर्णौषधोऽन्नं पेयाद्यमाचरेत् श्लेष्मवान् न तु ।
पेया कफं वर्धयति पङ्कं पांसुषु वृष्टिवत् ॥ ७१ ॥
श्लेष्माभिष्यण्णदेहानामतः प्रागपि योजयेत् ।
यूषान्कुलत्थचणककळायादिकृतान् लघून् ॥ ७२ ॥
रूक्षांस्तिक्तरसोपेतान् हृद्यान् रुचिकरान्पटून् ।

सर्वाङ्गसुन्दरी

जीर्णौषधेत्यादि ॥ जीर्णं परिणतमौषधं यस्य स जीर्णौषधः । स पेयाद्यमेव पूर्वोक्तमन्नं भुञ्जीत । अद्यत इत्यन्नमिति कृत्वा पेयादेरप्यन्नत्वम् ।

आदिशब्देन यूषादिपरिग्रहः। न च सर्वः पेयादिकमाचरेदित्याह—श्लेष्मवान् न तु। जीर्णौषधोऽपि श्लेष्मवान् नरः पेयादिकं नाश्नीयात्। किमित्याह—पेयेत्यादि। यतः पेया कफं वर्धयति। विलीनस्य कफस्य स्त्यानभावतामुत्पादयति। संस्थानविशेषमुपर्युपरिभावतयोपचयमुत्पादयति, न तु सा कफं साक्षाद्वर्धयतीति वर्धयतेरर्थ, अनेकार्थत्वाद्धातूनाम्। इत्ययमर्थोऽनुरूपतन्त्रकारदृष्टान्तदर्शनादवगम्यते। तथा चाह—पङ्कं पांसुषु वृष्टिवदिति। यथा पांसुषु वृष्टिः पतिता पङ्कं वर्धयति शिथिलरूपतां पांसूनामपास्य निबिडरूपतां तेषामुत्पादयति। न पांसून् वृष्टिर्वर्धयत्याधिक्यं न नयतीति। यद्याधिक्यमस्यार्थस्तन्त्रकारस्यात्र विवक्षितोऽभविष्यत्तदानीमत्रैवं स्पष्टमेव दृष्टान्तमदर्शयिष्यत्। पेया कफं वर्धयति, यथा वृष्टिर्नदीजलमिति। तथा च तन्त्रकारोऽमुनैवानुसारेणाह—श्लेष्माभिष्यण्ण इति। अभिपूर्वात्स्यन्देः स्रवणार्थो व्युत्पादितः। श्लेष्मणा स्रुतिरूपेणैवाभिष्यण्णः क्लिन्न इव देहो येषां ते श्लेष्मभिष्यण्णदेहास्तेषामतो ज्वरिणां प्रागपि प्रथम—पेयावसरेऽपि यूषान्योजयेत्। किमुत श्लेष्मवतः पुंसो जीर्णौषधस्य यूषान् योजयेदित्यपिशब्दार्थः। किंभूतान्यूषान्—कुलत्थादिकृतान्। तथा लघून्। ननु कुलत्थादीनां लघुत्वात्तत्कृता यूषा लघव एव भविष्यन्ति, तत्किं लघूनित्य—नेन। अत्रोच्यते—शिम्बीधान्यानां मध्ये गुरवोऽपि राजमाषादयः सन्ति। तन्निवृत्त्यर्थमेतत्। अपि च लघूनित्यनेन यूषप्रकृतिद्रव्यैरल्पपरिमाणैः कृतानिति द्योतयति। यतोऽल्पपरिमाणैः कुलत्थादिभिः कृता लघुतराः स्युस्तस्माल्लघूनिति युक्तम्। तथा रूक्षान् घृतभर्जनादिरहितान्। तथा तिक्तरसयुक्तान्। तथा हृद्यानिष्टरसगन्धवर्णस्पर्शयुक्तत्वाच्चेतस आह्लादकरान्। तथा रुचिकरान् ज्वरिणोऽन्यस्य च रोचिष्णून्। तथा पटून् सलवणानिति॥

### शशिलेखा

अस्मिंश्चौषधे निरन्नप्रयुक्ते तदहरेव पेयाविलेप्यादिकमन्नमाचरेत्। किं सर्व इत्याह—श्लेष्मवान् न तु। अनेन पेयाद्यन्ने प्रतिषेधः। अत्र हेतुः—पेया कफं वर्धयतीत्यादिः। एवं प्रतिषिद्धायां किं योज्यमित्याह—श्लेष्मेत्यादि। अभिष्यण्णशब्देनोत्क्लिष्टपर्यायेण कफे पाचनत्वेन पेयानां विधाने विरोधं निर्वर्तयति। प्रागपीति न केवलमौषधे जीर्णे पेयादिप्रतिषेधो यावत् कफाधिके लङ्घितलिङ्गादनन्तरमपि यूषानेवोदनेन भृष्टतण्डुलेन सह योजयेत्। रूक्षा-

निति। विना स्नेहेन संस्कृतान्। तिक्तो रसः ज्वरघ्नानां कषायाणां यथायोग्यान्यतमद्रव्याश्रयः ॥

रक्ताद्याः शालयो जीर्णाः षष्टिकाश्च ज्वरे हिताः ॥ ७३ ॥
श्लेष्मोत्तरे वीततुषास्तथा वाट्यकृता यवाः।
ओदनस्तैः स्रुतो द्वित्रिः प्रयोक्तव्यो यथायथम् ॥ ७४ ॥
दोषदूष्यादिबलतो ज्वरघ्नक्वाथसाधितः।

सर्वाङ्गसुन्दरी

**रक्ताद्या इति** ॥ रक्ताद्या"रक्तो महान्सकलम" इत्यादयः तथा षष्टिकाश्च व्रीहयोऽपि जीर्णाः पुराणा हिताः पथ्याः। श्लेष्मोत्तरे प्रभूतश्लेष्मणि ज्वरे वीततुषा अपनीतत्वचो यवाश्च पथ्याः। कीदृशाः— वाट्यकृताः भृष्टविदलीकृता इत्यर्थः। ओदनस्तैः रक्तशाल्यादिभिः पूर्वोक्तैश्च कृतो ज्वरिणो यथायथं यो यस्योदनो दानयोग्यः स तस्य प्रयोक्तव्यः। किंभूतः— द्विस्त्रिः स्रुतः द्वौ वारौ त्रीन्वारान्वा जलं दत्वा धौतः स्रुतः। कथं प्रयोज्यः--- दोषदूष्यादिबलेन। ज्वरघ्नैः ज्वरापहैर्द्रव्यैः क्वाथं कृत्वा तेन साधितो दोषस्यवातादेर्बलं तथा दूष्यस्य रसादेः बलं चापेक्ष्य। आदिग्रहणाद्देशकालवयःसत्त्वसात्म्यशरीराहारबलं गृह्यते। कफाधिकानां ज्वरिणामकृतपेयानामेव कुलत्थमुद्गचणकादियूषा उक्ताः॥

शशिलेखा

ज्वरे चान्नं जीर्णा रक्ताद्याः शालयः षष्टिकाश्च पाठक्रमेण हिताः। श्लेष्मोत्तरे तु यवा अपि। तैश्च रक्तशाल्यादिभिर्दोषदूष्याद्यपेक्षया ज्वरघ्नानन्तरोक्तक्वाथसाधितः सिद्ध ओदनः। द्वौ वारौ त्रीन् वारान् वा प्रक्षाल्य स्रुतो यथायथं ज्वरे प्रयोक्तव्यः॥

सम्प्रति सामान्येन ज्वरिणां कृतपेयानां यूषादीनाह—

मुद्गाद्यैर्लघुभिर्यूषाः कुलत्थैश्च ज्वरापहाः ॥ ७५ ॥
कारवेल्लककर्कोटबालमूलकपर्पटैः।
वार्ताकनिम्बकुसुमपटोलफलपल्लवैः ॥ ७६ ॥
अत्यन्तलघुभिर्मांसैर्जाङ्गलैश्च हिता रसाः।
व्याघ्रीपरूषतर्कारीद्राक्षामलकदाडिमैः ॥ ७७ ॥

संस्कृताः पिप्पलीशुण्ठीधान्यजीरकसैन्धवैः ।
सितामधुभ्यां प्रायेण संयुता वा कृताऽकृताः ॥ ७८ ॥

अनम्लतक्रसिद्धानि रुच्यानि व्यञ्जनानि च ।
अच्छान्यनलसम्पन्नान्यनुपानेऽपि योजयेत् ॥ ७९ ॥

तानि क्वथितशीतं च वारि मद्यं च सात्म्यतः ।

सर्वाङ्गसुन्दरी

**मुद्गाद्यैरित्यादि** ॥ मुद्गाद्यैः शिम्बीधान्यैर्लघुभिः कृता यूषास्तथा कुलत्थैः कृता यूषाश्च ज्वरघ्नाः । मुद्गाद्यैरित्यादिः प्रकारे । तेन सुजरा मकुष्ठमसूरादयो गृह्यन्ते । मुद्गशब्दस्यादौ निर्देश इदं बोधयति—यूषसाध्ये व्याधौ बाहुल्येन मुद्गयूषः कार्यः, मुद्गानां पथ्यतमत्वात् । तथा चोवाच मुनिः—"मुद्गाः शिम्बिधान्यानां पथ्यत्वे श्रेष्ठतमाः" इति । ननु मुद्गाद्यैरित्यादिशब्देनैव कुलत्था गृहीता एव किं पृथङ् निर्देशेन । ब्रूमहे—कुलत्थयूषस्य ज्वरविषये विरलः प्रयोगः कार्य इति सूचयितुं पृथक्कृतो निर्देशः । तथा च कुलत्था एवंगुणाः पठ्यन्ते—"उष्णाः कुलत्थाः पाकेऽम्लाः शुक्राश्मश्वासपीनसान् । कासार्शःकफवातांश्च घ्नन्ति पित्तास्रदाः परम्" ॥ इति एवमुष्णत्वादम्लविपाकित्वादतिपित्तास्रकारित्वात्कुलत्थानां यूषो बहुद्रव्यपरिमाणो बहुमात्रयोपयुक्तो ज्वरस्य न शान्तये सम्पद्यते । प्रत्युत वृद्धये स्यादिति संभाव्यते, पित्तविरुद्धत्वात् । तस्मादल्पपरिमाणद्रव्यसाधितोऽल्पमात्रया कुलत्थयूषः श्लेष्माद्युपशमकृद्यावन्मात्रः स्यात्तावानेव प्रयोज्य इति स्थितम् । कारवेल्लादिभी रसा ज्वरे हिताः । मुनिस्तु कारवेल्लकादीनां शाकत्वमेवेच्छति । खरणादेऽप्युक्तम्—'पटोलं सफलं निम्बं कर्कोटककठिल्लकम् । शाकं पर्पटकं च स्यात्"इति । तथा जाङ्गलैर्जाङ्गलदेशप्राणिजैस्तदभावे तत्तुल्यैरन्यदेशप्राणिजैरपि मांसैर्हिता रसा व्याघ्र्यादिभिः संस्कृतास्तथा पिप्पल्यादिभिः संयुता इति वक्ष्यमाणेन सम्बन्धः । संस्कारयोगमात्रभाजः पिप्पल्यादयोऽत्र योज्या इत्यर्थः । प्रायेण केचिदेवा सितामधुभ्यां सहिताः, अवस्थावशान्न तु सर्व एव । किंभूता रसा यूषाश्चैवंविधाः कार्याः—कृताकृताः । धानकाडाडिमाजाजिशुण्ठ्याद्यैरपि संस्कृता यूषा रसाश्च कृताः । विपरीतास्त्वतोऽकृताः । अनम्लेन तक्रेण सिद्धानि तथा रुच्यान्यभ्यवहर्तुमभिलषितानि तथाच्छानि तनूनि न घनानि तथाऽनलसम्पन्नानि वह्निपक्वानि । केचित्तक्रमपक्वमेवाच्छीकृत्य संस्कृत्य च शुण्ठीजीरकादिनाभ्यवहरन्ति । तन्निषेधायैतदुक्तम् । एवंविधानि व्यञ्जनानि तेमनानि रसकषायप्रायाण्योदनेन

सहाभ्यवहर्तव्यानि । अनुपानेष्वाहारस्य पश्चात्पानेऽपि तानि यूषरसादीनि योजयेत् । तथा क्वथितशीतं च वारि मद्यं च सात्म्यतः सात्म्यवशादनुपाने योजयेत् ॥

शशिलेखा

मुद्गाद्यैरित्यत्र लघुग्रहणेन राजमाषादीनां गुरूणां प्रतिषेधः । कारवेल्लादिभिः पृथगतिलघुभिश्च जाङ्गलानां मांसैस्तद्योग्यज्वरे रसा हिताः । ते च यूषरसा यथाविषयं व्याघ्र्यादिभिः सितामधुभ्यां च संस्कृता वा संयुक्ता वा कृता वाऽप्यकृता वा नात्यम्लेन च तक्रेण सिद्धानि व्यञ्जनान्यन्नेन सहोपयोजयेत् । तान्येव च यूषरसादीन्यनुपानेऽपि योजयेत् । सात्म्यापेक्षया च क्वथितशीतवार्यादिकमप्यनुपाने योजयेदिति ॥

सज्वरं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु ॥ ८० ॥
श्लेष्मक्षयविवृद्धोष्मा बलवाननलस्तदा ।

सर्वाङ्गसुन्दरी

सज्वरमित्यादि ॥ सज्वरं ज्वरसहितं नरं दिनान्ते भोजयेत् । अथवा ज्वरमुक्तमचिरकालज्वरत्यक्तम् । किंभूतं भोजनं भोजयेत्—लघु—मात्रया स्वभावादुभयथा यल्लघु । किमित्येतस्मिन्काले भोजयेदित्याह—श्लेष्मेत्यादि । तदा तस्मिन् दिनान्ताख्ये काले यः श्लेष्मक्षयस्तेन विवृद्ध ऊष्मा स्वभावो यस्यानलस्य जाठराग्नेरसौ श्लेष्मक्षयविवृद्धोष्मा अनलः । अत एव च बलवांस्तदानीं पक्तुं शक्तः ॥

शशिलेखा

सज्वरमित्यादिना सर्वज्वरावस्थासु भोजनकालं नियमयति । सुबोधम् ॥

यथोचितेऽथवा काले देशसात्म्यानुरोधतः ॥ ८१ ॥
प्रागल्पवह्निर्भुञ्जानो न ह्यजीर्णेन पीड्यते ।

सर्वाङ्गसुन्दरी

यथोचित इति ॥ अथवा यथोचिते काले सज्वरं ज्वरमुक्तं वा भोजयेत् । यस्य यस्य यः उचितः सात्म्य आहारकालः तस्मिन् भोजयेत् ।

यथोचिते हि काले प्रायः क्षुदुपशमो जायते। कथं भोजयेदित्याह—देशेत्यादि। देशसात्म्यवशात्तं भोजयेत्, नैवमेव। नन्वेवं सति यस्य पूर्वाह्णे काले भोजनमुचितं तस्य तदा भोजने को गुणः स्यादित्याह—प्रागित्यादि। यस्मादल्पवह्निर्मन्दाग्निः पूर्वाह्णे भुञ्जानोऽजीर्णेन न पीड्यते न बाध्यते॥

### शशिलेखा

यस्त्वल्पाग्निः सः प्रागेव भुञ्जानः अजीर्णेन न पीड्यते। प्रागेव प्रथमदिने। एष कषायान्तो लङ्घनक्रमः सामे तरुण एव ज्वरे साधुरिति॥

अधुना सर्पिष्पानकालं निरूपयति—

कषायपानपथ्यान्नैर्दशाह इति लङ्घिते ॥ ८२ ॥
सर्पिर्दद्यात् कफे मन्दे वातपित्तोत्तरे ज्वरे।
पक्वेषु दोषेष्वमृतं तद्विषोपममन्यथा ॥ ८३ ॥
दशाहे स्यादतीतेऽपि ज्वरोपद्रववृद्धिकृत्।
लङ्घनादिक्रमं तत्र कुर्यादाकफसंक्षयात् ॥ ८४ ॥

### सर्वाङ्गसुन्दरी

कषायेत्यादि॥ कषायस्य मुस्तापर्पटकादेः पानं कषायपानम्। तेन। तथा पथ्यान्नैः पेयायूषादिभिर्दशाहे इत्यनेन प्रकारेण लङ्घितेऽतिक्रान्ते। तदा हि प्रायेण क्षीणः कफः सम्भाव्यते। अतो दशाहे लङ्घित इत्युक्तम्। सामज्वर-संज्ञानिवृत्तिस्तु षडहादूर्ध्वं सप्तमे वा अष्टमे वाऽहनि ज्वरस्य जायते। तथा च मुनिः—"सप्ताहेन तु पच्यन्ते सप्तधातुगता मलाः। निरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि" इति। तस्मात्कषायपानपथ्यान्नैरिति दशाहे लङ्घिते, कफे मन्दे क्षीणप्राये, तथा वातपित्तोत्तरे, वातपित्ताधिके, अस्यामवस्थायां पक्वेषु निरामेषु वातादिषु सर्पिर्दद्यात्, नापक्वेषु। तत्र सर्पिर्दत्तं अमृतमिव महागुणमित्यर्थः। अन्यथा पुनरपक्वेषु दोषेषु कफोत्तरे तत्सर्पिर्दत्तं विषोपमं विषतुल्यं दशाहेऽतिक्रान्तेपि स्यादतोऽस्यामवस्थायां सर्पिर्दत्तं ज्वरस्य तदुपद्रवाणां च वृद्धिं करोति। तस्मादस्यामवस्थायां सर्पिष्पानमयुक्तम्। तत्र कफोत्तरे ज्वरे सति लङ्घनादिक्रमं कुर्यात्। कियन्तं कालम्-आकफसंक्षयाद्यावत्कफस्य ज्वर-

कारिणोधिकस्य संक्षयः सम्यक् क्षयः। न धातुरूपस्य कफस्य क्षयोपि यावद्यतः कफज्वरेपि विडङ्गादिसर्पिर्वक्ष्यति॥

शशिलेखा

अस्मिंश्च कषायान्ते लङ्घनक्रमे कृतेऽपि यदि ज्वरो न शान्तस्तत आदितो दशाहेऽतीते लङ्घनक्रमेण च कफे मन्दीभूते वातपित्ते च पूर्वं संप्राप्तस्थिमितीभूते संप्रति लङ्घनेनैवाधिक्यमुपगतवति सर्पिर्दद्यात्। दशाहग्रहणमस्या यथोक्ताया ज्वरावस्थायास्तदा प्रायोभवत्वादुपलक्षणार्थं तत्पूर्वेष्वहस्सु सर्पिःप्रतिषेधार्थं च। तच्च सर्पिर्ज्वरे दोषेषु पक्वेषु सत्सूपयुक्तममृतं भवति। अन्यथाऽमेष्वपक्वेष्वतीतेऽपि दशाहे प्रयुक्तं विषोपमं सत् ज्वरोपद्रववृद्धिकृत् स्यात्। उपद्रवा श्वासादय उक्ताः। ननु यदि सर्पिरत्र प्रतिषिद्धं किमन्यद्योज्यमित्याह—लङ्घनादिक्रमेमिति। तस्य च क्रमस्य कफसंक्षय अवधिः॥

अथ जीर्णज्वरचिकित्सामाह—

**देहधात्वबलत्वाच्च ज्वरो जीर्णोऽनुवर्तते।**

सर्वाङ्गसुन्दरी

**देहधात्विन्यादि** ॥ जीर्णः पुराणो ज्वरोऽनुवर्ततेऽनुबध्नाति। कुतः—देहधात्वबलत्वात्। देहधातवस्तदारम्भका रसरुधिरादयः। देहग्रहणाद्वातपित्तश्लेष्मणोपि धारणाद्धातव उच्यन्ते। देहधातूनामबलत्वं स्वल्पत्वम्। तस्माच्च जीर्णो ज्वरोऽनुबध्नाति। तत्स्वभावमात्रादेवेति चशब्दस्यार्थः॥

शशिलेखा

देहधात्वित्यादिना प्रयुक्तेपि विषये लङ्घनक्रमे ज्वरानुवृत्तेर्हेतुरुच्यते। देहस्याबलत्वं धातूनां चापरिपोषो ज्वरानुवृत्तिहेतुः। तस्यां च जीर्णतायां प्रथमं कषायपानं पश्चात्सर्पिरुपक्षिप्तम्। तस्यैवात्र विशेषेण विषयप्रदर्शनं क्रियते। तस्मिन् जीर्णज्वरे सर्पिः शस्यते कथमित्याह। इति जीर्णज्वरस्य शान्त्यर्थं देहबलाधानार्थं च सर्पिष्पानं हितमिति प्रतिपादयन्नाह॥

**रूक्षं हि तेजो ज्वरकृत्तेजसा रूक्षितस्य च ॥ ८५ ॥**

**वमनस्वेदकालाम्बुकषायलघुभोजनैः।**

य: स्याददतिबलो धातु: सहचारी सदागति: ॥ ८६ ॥
तस्य संशमनं सर्पिर्दीप्तस्येवाम्बु वेश्मन: ।

सर्वाङ्गसुन्दरी

रूक्षमित्यादि ॥ रूक्षं यत्तेजस्तज्ज्वरकृत् । रूक्षमिति वचनाद्देहोष्मा जाठरोऽनलो गृह्यते । तस्यैव ज्वरकृत्त्वात् । तथा चोक्तम्—"मलास्तत्र स्वैस्वैर्दुष्टा: प्रदूषणै:"इत्यादि यावत् "ज्वरं निर्वर्तयन्ति ते" इति । तेजसेत्यादि । जाठरानलस्यैव ज्वरकृत्त्वम् । तेन ज्वरकृता रूक्षेण तेजसा रूक्षितस्य च पुंस: सर्पि: संशमनम् । चशब्दादन्यस्यापि । अत एवाह—वमनेत्यादि । वमनादिभि: रौक्ष्यकृद्भि: कृतैस्तदानीं य: स्याद्भवेदतिबल: प्रवृद्धत्वादतिसमर्थो धातु: । को धातु:—सहचारी य: सह चरति तच्छीलो वाताख्यो धातुरग्निना सह चरति । नन्वेवं परस्परसहचरभावत्वेऽग्निरपि वायुना सह चरति । ततोऽग्नि-स्वभावत्वात् पित्ताख्योऽपि धातुरिह सहचारी प्राप्तस्तन्निवृत्त्यर्थं सदागतिरित्याह । सदागतित्वं वायोरेवान्वर्थत्वेनोपपद्यत इति न पित्तस्य ग्रहणम् । तस्य सर्पि: संशमनम् । किं कस्य इव संशमनम्—वेश्मनो गृहस्य दीप्तस्य ज्वलितस्याम्बु जलं यथा ॥

शशिलेखा

रूक्षमित्यादि ॥ तेजो हि ज्वरकृत् पित्ताख्यं तच्च तेजस्त्वादेव रूक्षम् । तेन च तेजसा रूक्षितस्य सत: पुरुषस्य वमनादिभिरपतर्पणैर्यो धातु: सदागत्या-ख्य: प्रभञ्जनापरनामा तेन सहचार्यतिबल: स्यात् । तस्य सदागतेस्तेजस: सहचा-रिण: सर्पि: संशमनं भवति, यथा दीप्तस्य वेश्मनोऽम्बु ॥

वातपित्तजितामग्र्यं संस्कारमनुरुध्यते ॥ ८७ ॥
सुतरां तद्धृयतो दद्याद्यथास्वौषधसाधितम् ।

सर्वाङ्गसुन्दरी

वातपित्तेत्यादि ॥ यस्मात् घृतं सर्वेषां वातपित्तजितामग्र्यं यथा न तथान्यान्यौषधानि वातपित्तजिन्तीत्यत एव प्रागभ्यधात् । "सर्पिर्दद्यात् कफे मन्दे वातपित्तोत्तरे ज्वरे" इत्यादि । यस्माच्च घृतं संस्कारमनुरुध्यतेऽनुवर्तते । गुणान्तराधानं संस्कार:, तं च यस्मात् घृतं सुष्ठु अतिशयेन वैलक्षण्येन संस्कार-

नुरुध्यते आत्मसात्करोति, तथा तैलादिरपि स्नेहः संस्कारमनुवर्तते । ननु यथा घृतं स्वशैत्यमजहदेव संस्कारमनुवर्तत इत्येतच्च स्नेहविधौ प्रतिपादितमेव । अमुमेव च न्यायमङ्गीकृत्य मुनिरप्यवोचत्—"नान्यस्नेहस्तथा कश्चित्संस्कारमनुवर्तते । यथा सर्पिरतः सर्पिः सर्वस्नेहोत्तमं मतम् ॥" इति । हि यस्मात्सुतरां संस्कारमनुरुध्यते घृतम्, तस्माद् घृतं जीर्णे वातपित्तोत्तरे ज्वरे निर्विकल्पं दद्यात् । कीदृशम्—यथास्वौषधसाधितं यथायथं व्याधिप्रतिपक्षैरौषधैः पक्वम् ॥

शशिलेखा

तच्च सर्पिर्वातपित्तजितामौषधानामग्र्यं तथा संस्कारमनुरुध्यते । येनैव संस्क्रियते तद्गुणैः सहात्मीयकार्यकरं भवतीत्यर्थः । यतश्च संस्कारमनुरुध्यते, ततस्तत्सुतरां यथास्वौषधसाधितं ज्वरिणे दद्यात् । वातान्वये तदौषधैः सिद्धमेवं पित्तकफयोरपि विज्ञेयम् ॥

विपरीतं ज्वरोष्माणं जयेत्पित्तं च शैत्यतः ॥ ८८ ॥
स्नेहाद्वातं घृतं तुल्यं योगसंस्कारतः कफम् ।

सर्वाङ्गसुन्दरी

**विपरीतमित्यादि ॥** घृतं विपरीतं ज्वरोष्माणं जयेत् । ज्वरनिर्वर्तक ऊष्मा जाठरोऽनलो रूक्षतीक्ष्णादिगुणः । स पक्तिस्थानान्निरस्तो ज्वरनिर्वर्तको घृतस्य स्निग्धशीतत्वादिगुणयोगाद्विपरीतः । एवं विपरीतं ज्वरोष्माणं घृतं जयेत् पित्तं च शैत्यतः शैत्यात् घृतं जयेन्न स्नेहात्, "पित्तं सस्नेहम्" इति वचनात् । स्नेहात् स्निग्धत्वात् घृतं वातं जयेन्नतु शैत्यात्, "शीतोऽनिलः" इति वचनात् । कफं स्निग्धशीतत्वादिना तुल्यमपि घृतं योगसंस्काराभ्यां जयेत् । योगो युक्तिः । कफज्वरहरैर्द्रव्यैः सह योजनात् संस्कारो गुणाधानम् । योगश्च संस्कारश्च योगसंस्कारौ ताभ्यां घृतं कफं जयेत् ॥

शशिलेखा

तच्च सिद्धं सर्पिस्त्रयाणामपि दोषाणां पथ्यमिति प्रदर्शनार्थमाह—विपरीतमित्यादि । ज्वरोष्माणं पित्तं च विपरीतं शैत्याज्जयेत् । वातं तु विपरीतं स्नेहाज्जयेत् । कफं पुनस्तत्तुल्यमपि तन्नाशकद्रव्यसंयोगसंस्काराभ्यां जयेत् ।

ननु विपरीतं ज्वरोष्माणं घृतं जयेदिति न घटते, घृतस्याग्निवृद्धिहेतुत्वात्। तथा च वक्ष्यति—"स्नेहमेव परं विद्याद्दुर्बलानलदीपनम्। नालं स्नेहसमिद्धस्य शमायान्नं सुगुर्वपि॥" इति। अत्रोच्यते—घृतं स्नेहनत्वदीपनत्वाभ्यां वातशमनं कुर्वज्ज्वरोष्माक्षेपकत्वं वातस्य विनिवार्य ज्वरोष्मणो रौक्ष्यतैक्ष्ण्यादियुतस्य घृतं विपरीतगुणत्वाच्छमं करोति, न वृद्धिम्। ननु यथा स्नेहाद्वातं शमयति, तथा तत एव स्नेहात्किमिति घृतं समानगुणत्वान्न पित्तं वर्धयति। ब्रूमः—जीर्णज्वरे लङ्घनादिभिरतिरूक्षेण ज्वरोष्मणा पित्तं रूक्षमेव सम्पन्नं स्नेहभागपरिक्षयान्न सस्नेहमतः कथं कृत्वा तद्वर्धयतु। तच्च घृतं पित्तमेव शमयति, न वातं कोपयति, द्रव्यस्वभावत्वात्सस्नेहत्वाच्च॥

पूर्वे कषायाः सघृताः सर्वे योज्या यथामलम् ॥ ८९ ॥
त्रिफलापिचुमन्दत्वङ्मधुकं बृहतीद्वयम्।
समसूरदलं क्वाथः सघृतो ज्वरकासहा ॥ ९० ॥

### सर्वाङ्गसुन्दरी

**पूर्वे इत्यादि॥** पूर्वे कषायाः प्रागुक्तानि पाचनानि सह घृतेन प्रयोज्याः। कथम्—यथामलं दोषानतिक्रमेण। त्रिफलादीनि मसूरदलान्तानि चैष क्वाथो घृतेन सहोपयोजितो ज्वरकासघ्नः स्यात्॥

### शशिलेखा

अतो हेतोः पूर्वे मुस्तापर्पटकाद्याः कषायाः यथादोषं सघृताः साज्या योज्या। तेनैतदुक्तं भवति—दोषाद्यपेक्षया कदाचिदौषधैः सिद्धं सर्पिः पिबेत्। कदाचिदौषधानि सर्पिषा सहेति। सुबोधम्। पिचुमन्दो निम्बः॥

पिप्पलीन्द्रयवधावनितिक्ता-
शारिबामलकतामलकीभिः।
बिल्वमुस्तहिममालतिसेव्यै-
र्द्राक्षयाऽतिविषया स्थिरया च ॥ ९१ ॥

1. ധാവനി=ഓരില വേരു്. തിക്തകം=കടുകരോഹിണി. താമലകി=കീഴാനെല്ലി. മാലതി=പിച്ചകം സ്ഥിരം=മൂവിലവേരു്.

घृतमाशु निहन्ति साधितं
ज्वरमग्निं विषमं हलीमकम् ।
अरुचिं भृशतापमंसयो-
र्वमथुं पार्श्वशिरोरुजं क्षयम् ॥ ९२ ॥

सर्वाङ्गसुन्दरी

पिप्पलीत्यादि ॥ पिप्पल्यादिभिः साधितं घृतमाशु ज्वरं निहन्ति । विषमाग्न्यादींश्च ॥

शशिलेखा

पिप्पल्यादिभिः पक्वं घृतं ज्वरादीन् सद्यो हन्ति । ज्वरं जीर्णमित्यर्थात् । वह्वेर्वैषम्यमुक्तलक्षणम् । इन्द्रयवः कलिङ्गः । धावनी गुहा । तिक्ता कटुका । आमलकं धात्रीफलम् । तामलकी ताली । "अजटा बहुपत्रा च भूधात्री तामलक्यपि" । हिमं चन्दनम् । सेव्यं उशीरम् । द्राक्षा मृद्वीका । स्थिरा अंशुमती । सैव सालपर्णी । कल्काच्चतुर्गुणः स्नेहः पलसंख्यया । स्नेहात्तोयं चतुर्गुणम् । एतच्च प्रमाणस्यानुक्तौ सर्वत्र स्नेहपाकेषु विज्ञेयम् । सुबोधम् ॥

तैल्वकं पवनजन्मनि ज्वरे
योजयेत्त्रिवृतया वियोजितम् ।
तिक्तकं वृषघृतं च पैत्तिके
यच्च पालनिकया भृतं हविः ॥ ९३ ॥
विडङ्गसौवर्चलचव्यपाठा-
व्योषाग्निसिन्धूद्भवयावशूकैः ।
पलांशकैः क्षीरसमं घृतस्य
प्रस्थं पचेज्जीर्णकफज्वरघ्नम् ॥ ९४ ॥
गुडूच्या रसकल्काभ्यां त्रिफलाया वृषस्य च ।
मृद्वीकाया बलायाश्च स्नेहाः सिद्धा ज्वरच्छिदः ॥ ९५ ॥

सर्वाङ्गसुन्दरी

तैल्वकमित्यादि ॥ तैल्वकं घृतं वातव्याधिचिकित्सितोक्तं तत्त्रिवृतया रहितं वातजे ज्वरे पिबेत् । पैत्तिके ज्वरे तिक्तकं कुष्ठचिकित्सितोक्तं तथा

वृषघृतं रक्तपित्तचिकित्सितोक्तमत्रैव वा वक्ष्यमाणं योजयेत्। पालनिकया त्रायन्त्या यत् घृतं पक्वं तच्च पित्तज्वरे योजयेत् ॥

विडङ्गादिभिः पलप्रमाणैर्घृतप्रस्थं क्षीरतुल्यं चतुर्गुणजले पचेत्। तच्चोपयुक्तं जीर्णो यः कफज्वरस्तं हन्ति ॥

गडूच्यादीनां पञ्चानां पृथक् पृथक् क्वाथकल्काभ्यां सिद्धाः स्नेहाः ज्वरच्छिदो जीर्णज्वरघ्नाः स्युरित्यर्थः ॥

शशिलेखा

विडङ्गादिभिः पलांशकैः कल्कितैः क्षीरप्रस्थयुक्तं घृतप्रस्थं पक्वं जीर्णकफज्वरघ्नम्। गुडूच्याः क्वाथः स्नेहाच्चतुर्गुणः। तस्या एव च कल्कः स्नेहचतुर्थांशः। एवं त्रिफलाया वृषस्य च वाच्यम्। यत्र च सामान्येन क्वाथशब्दस्तत्र "क्वाथ द्रव्यपले कुर्यात् प्रस्थार्धं पादशेषितम्" इत्येतदवगन्तव्यम्। तेन द्रव्यात् षोडशगुणं क्वथनजलं क्वथितशेषं चतुर्थांशम्। द्रव्याच्चतुर्गुणं स्नेहः ॥

जीर्णे घृते च भुञ्जीत मृदुमांसरसौदनम्।
बलं ह्यलं दोषहरं परं तच्च बलप्रदम् ॥ ९६ ॥
कफपित्तहरा मुद्गकारवेल्लादिजा रसाः।
प्रायेण तस्मान्न हिता जीर्णे वातोत्तरे ज्वरे ॥ ९७ ॥
शूलोदावर्तविष्टम्भजनना ज्वरवर्धनाः।

सर्वाङ्गसुन्दरी

जीर्ण इत्यादि ॥ घृते च जीर्णे परिणते सति मृद्वतीक्ष्णसंस्कारसाधनं मांसरसौदनं भुञ्जीत। हि यस्मादलं बलं जातं दोषहरं भवति, तच्च रसाशनमतिशयेन बलकरं स्यात् ॥

शशिलेखा

यत एवं तस्मात्कारणान्मुद्गकारवेल्लादिजा रसाः कफपित्तहरा जीर्णज्वरे वातोत्तरे प्रायेण न हिताः। ते ह्युपयुक्ताः शूलादिकृतो ज्वरवर्धनाश्च स्युः ॥

शशिलेखा

यस्मिन् कस्मिंश्चित् घृते जीर्णे मृदु मांसरसाशनं भुञ्जीत। यतस्तन्मांसरसाशनं परं बलप्रदं बलं च श्रेष्ठं दोषहरमौषधादितो यत एवमतः। पूर्वोक्ताः कारवेल्लादिजा रसाः ये पित्तश्लेष्महरास्ते जीर्णज्वरे वातोत्तरत्वान्न हिताः। शूलादिजनना ज्वरवर्धनाश्च ॥

न शाम्यत्येवमपि चेज्ज्वरः कुर्वीत शोधनम् ॥ ९८ ॥
शोधनार्हस्य वमनं प्रागुक्तं तस्य योजयेत्।
आमाशयगते दोषे बलिनः पालयन् बलम् ॥ ९९ ॥

सर्वाङ्गसुन्दरी

न शाम्यतीत्यादि॥ एवमपि कृते सति यदि ज्वरो न शाम्यति, तदा शोधनार्हस्य नरस्य शोधनं कुर्वीत। किं सर्वत्र सर्वं देयमित्याह—प्रागुक्तं "पिप्पलीभिर्युतां गालाम्" इत्यादिकं वमनं योजयेत्। कदा—दोषे आमाशयगते सति। बलवतः पुंसो वमनं योजयेत्। बलं पालयन् रक्षन्॥

शशिलेखा

एव च स्नेहयोजनेनापि यदि विषये प्रयुक्तेन ज्वरो न शाम्यति, ततः शोधनार्हस्य गर्भिणीरूक्षादिवर्जितस्य शोधनं योजयेत्। वमनं पूर्वोक्तपिप्पल्यादि यथायोगं योजयेत्। तच्च वमनं जीर्णज्वरिण आमाशयगते दोषे योज्यं बलिनश्च ॥

पक्वे तु शिथिले दोषे ज्वरे वा विषमद्यजे।
मोदकं त्रिफलाश्यामात्रिवृत्पिप्पलिकेसरैः ॥ १०० ॥
ससितामधुभिर्दद्याद्व्योषाद्यं वा विरेचनम्।
द्राक्षाधात्रीरसं तद्वत्सद्राक्षां वा हरीतकीम् ॥ १०१ ॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा।
त्रिफलां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥ १०२ ॥
विरिक्तानां च संसर्गी मण्डपूर्वा यथाक्रमम्।

सर्वाङ्गसुन्दरी

**पक्व इत्यादि** ॥ पक्वे पुनर्दोषे तथा शिथिलेऽविष्टब्धेऽथवा विषजे मद्योत्थे वा ज्वरे मोदकं त्रिफलादिभिर्विरेचनं दद्यात्। व्योषाद्यं वा 'व्योषत्रिजातकाम्भोद-कृमिघ्नामलकैस्त्रिवृत्। सर्वैः समा समसिता क्षौद्रेण गुलिकाः कृताः॥' इति वा दद्यात्। अथवा द्राक्षामलकयो रसं तद्वद्दद्यात्। द्राक्षासहितां हरीतकीं वा दद्यात्। कर्णिकारं क्षीरेण द्राक्षारसेन वा दद्यात्। त्रिफलां त्रायन्तीं वा पयसा ज्वरी पिबेत्॥

विरिक्तानां ज्वरिणां चशब्दाद्वमितानां च यथाक्रमं क्रमानतिक्रमेण संसर्गी कर्तव्येत्यध्याहार्यम्। मण्डः पूर्वो प्रथमो यस्यां सैवम्। मण्डं प्रथमं दत्वानन्तरं पेयाविलेप्यादयो यथाक्रमं देयाः। कृतवमनविरेचनानन्तरं यः पेयाद्यवचारणाक्रमः स संसर्गीत्युच्यते॥

शशिलेखा

पक्वे तु दोषे शिथिले नातिलीने विरेचनं दद्यात्। तथा विषजे ज्वरे मद्यजे ज्वरे च सुतराम्। विषजो विषसंस्कारजः। किं विरेचनमित्याह— मोदकं त्रिफलादिभिः ससितामधुभिरथवा व्योषाद्यं मोदकं विरेचनकल्पपठितं "व्योषत्रिजातकाम्भोद" इत्यादिना तथा द्राक्षामलकाभ्यां विमिश्रितं रसं द्राक्षासहितां हरीतकीं वा आरग्वधं क्षीरेण वा मृद्वीकारसेन वा। पूर्वापेक्षया विकल्पः। सर्वयोगानां च दोषाद्यपेक्षया भिन्नविषयत्वम्। संसर्गी पेयादिक्रमः। अत्र मण्डः पूर्वं पश्चात्पेयादिः। यथाक्रममग्न्युत्कर्षार्थम्॥

**च्यवमानं ज्वरोत्क्लिष्टमुपेक्षेत मलं सदा ॥ १०३ ॥**
**पक्वोऽपि हि विकुर्वीत दोषः कोष्ठे कृतास्पदः**
**अतिप्रवर्तमानं वा पाचयन् संग्रहं नयेत् ॥ १०४ ॥**
**आमसंग्रहणे दोषा दोषोपक्रम ईरिताः।**
**पाययेद्दोषहरणं मोहादामज्वरे तु यः ॥ १०५ ॥**
**प्रसुप्तं कृष्णसर्पं स कराग्रेण परामृशेत्।**

सर्वाङ्गसुन्दरी

**च्यवमानमित्यादि** ॥ ज्वरेणोत्क्लिष्टमुत्क्लेशितं ज्वरोत्क्लेशितं मलं पुरीषाख्यं च्यवमानं पतन्तं उपेक्षेत। नन्वौषधादिना किमित्यसौ न ध्रियत इत्याह—

पक्कोऽपीत्यादि । दोषः पुरीषाख्यो यतः पक्कोऽपि अपिशब्दात्किमुतापक्कः । कोष्ठे आमपक्काशयाख्ये कृतं गृहीतमास्पदमवस्थितिर्येन स एवंभूतो विकुर्वीत विकारं कुर्यात् । अतिप्रवर्तमानं वा तं मलमपक्कं पाचयन् संग्रहं नयेत् । न त्वाम एव गृहीतव्य इत्याह—आमेत्यादि । आमशब्दः पुरीषाख्यस्यापच्यमानावस्थस्य लक्षणार्थः । आमस्यापक्कस्य संग्रहणमामसंग्रणम्, तस्मिन्नामसंग्रहणे ये दोषा भवन्ति, ते दोषोपक्रमणीयाध्याय ईरिता उक्ताः । तथा च तत्रोक्तम्—"उत्क्लिष्टानध ऊर्ध्वं वा न चामान्वहतः स्वयम् । धारयेदौषधैर्दोषान्विधृतास्ते हि रोगदाः ॥" इति । तस्मादामसंग्रहणार्थमौषधं न देयम् ॥

तथामज्वरेऽपि दोषनिर्हरणार्थमौषधं न देयमिति प्रतिपादयन्नाह—पाययेदित्यादि । तुर्व्यतिरेके भिन्नक्रमः । यस्तु मोहादज्ञानात् भिषक्पाशो दोषहरणमामज्वरे पाययेत्, स हि प्रसुप्तं कृष्णसर्पं करस्याग्रेण परामृशेत् । अतिप्रत्यवायं पश्यतैवमुक्तं तन्त्रकृता । अत्र च वाक्ये रूपकाख्योऽलङ्कारः । तस्य ह्येतल्लक्षणम्—"तदपरमौपम्ये सति यस्मिन्स्याद्वाक्ययोर्योगः" इति । अस्योदाहरणम्—"यः सेवते कुनृपतिं कुरुते बधिरस्य कर्णजापं सः" इति ॥

शशिलेखा

यत्र ज्वरे संतापादुत्क्लेशेन मल. स्वयमूर्ध्वमधो वा बहिः प्रवर्तते, तत्र तन्मलमुपेक्षेत । न विधारयेदित्यर्थः । यतो दोषः पक्कोपि कोष्ठे कृतास्पदः सन्नवश्यमेव विकारं कुर्यात्, तस्मादुपेक्षेत । अथवाऽतिप्रवर्तमानं बलहान्यादिभयात्पाचयन् वैद्यो मलं दोषं संग्रहं नयेत् । अपक्कं मावश्यं संग्रहं नयेत् । आमे च दोषे स्वयं प्रवर्तमाने संगृहीते ये दोषा उपद्रवा भवन्ति, ते दोषोपक्रमणाध्याये "विधृतास्ते हि रोगदाः" इतीरिताः । अनेन ग्रन्थेन "विधृतास्ते हि कुर्वते रोगानुत्पादनिर्दिष्टानतिस्थौल्यादिकान् गदान्"इति संग्रहोदिता उक्ताः । एतच्च दोषहरणं विरेचनं जीर्णज्वरे पक्के दोषे योज्यम् । यस्तु भिषङ्मूढो विरेचनमामज्वरे पाययेत्, सः स्वयमनर्थकारी प्रसुप्तं कृष्णसर्पं कराग्रेणापि परामृशेत् ॥

**ज्वरक्षीणस्य न हितं वमनं वा विरेचनम्  ॥ १०६ ॥**
**कामं तु पयसा तस्य निरूहैर्वा हरेन्मलान् ।**

सर्वाङ्गसुन्दरी

ज्वर इत्यादि ॥ ज्वरक्षीणस्य पुंसो वमनं न हितम्, नच विरेचनं हितम्। तर्हि कथं दोषनिर्हरणं तस्येत्याह—काममित्यादि। तस्य कामं यथेष्टं कृत्वा पयसा निरूहैर्वा मलान् हरेत् ॥

शशिलेखा

एवं ज्वरे जीर्णेपि ज्वरक्षीणस्य न वमनं हितम्, नापि विरेचनम्। काममित्यङ्गीकरणे। तथाविधस्य क्षीणस्य शोधनसाध्यतायां पयसा निरूहैर्वा ज्वरजैर्मलान् हरेत् ॥

क्षीरोचितस्य प्रक्षीणश्लेष्मणो दाहतृड्वतः ॥ १०७ ॥
क्षीरं पित्तानिलार्तस्य पथ्यमप्यतिसारिणः।
तद्वपुर्लङ्घनोत्तप्तं प्लुष्टं वनमिवाग्निना ॥ १०८ ॥
दिव्याम्बु जीवयेत्तस्य ज्वरं चाशु नियच्छति।
संस्कृतं शीतमुष्णं वा तस्माद्धारोष्णमेव वा ॥ १०९ ॥
विभज्य काले युञ्जीत ज्वरिणं हन्त्यतोऽन्यथा।

सर्वाङ्गसुन्दरी

क्षीरोचितस्येत्यादि ॥ क्षीरमुचितं सात्म्यं यस्य सः क्षीरोचितस्तस्य क्षीरोचितस्य, तथा प्रकर्षेण क्षीणः श्लेष्मा यस्य तस्य प्रक्षीणश्लेष्मणः, तथा दाहश्च तृट् च ते विद्येते यस्य तस्य दाहतृड्वतः, अत एव पित्तानिलाभ्यामार्तस्य पीडितस्य क्षीरं पथ्यम्। अतिसारिणोपि पथ्यं किं पुनरनतिसारिणः। क्षीरोचितस्येत्यादि—विशेषणविशिष्टस्य क्षीरं किन्न पथ्यमित्यपिशब्दार्थः। तद्वदित्यादि। तच्च क्षीरं लङ्घनोत्तप्तं वपुर्जीवयेत् कायस्य प्राणमुत्पादयेत्। किं किमिव। अग्निना दावेन प्लुष्टं वनं यथा दिव्याम्बु जीवयेत् प्ररोहयेत्तथा वपुः क्षीरमिति। लङ्घनशब्देनात्र सामान्यं लङ्घनशब्दवाच्यं वस्तु भण्यते। शरीरलाघवकर यद्द्रव्यं कर्म वा पुनः तल्लङ्घनमिति ज्ञेयमित्येवं लक्षणं भवेत्। न तु विशिष्टमुपवासलक्षणं योग्यतावशात्। तस्य ज्वरिणः पुंसस्तत्क्षीरमाशु ज्वरं च नियच्छति, न केवलं वपुर्जीवयेदिति चार्थः। संस्कृतमित्यादि। यत एवं महागुणं

क्षीरं तस्माद्धेतोः संस्कृतं द्रव्यान्तरेण तथा शीतमुष्णं चेति कृत्वा अथवा धारोष्णमेव काले विभज्य युञ्जीत। यथाविषयं काले प्रयोजयेत्। अतो यथा-निरूपितात् क्षीरोपयोगविषयादन्यथा अन्येन प्रकारेण प्रयुक्त क्षीरं ज्वरिणं हन्ति ॥

शशिलेखा

क्षीरोचितस्येत्यादिना पयसो विषयनिर्देशः। तत्क्षीरं लङ्घनोत्तप्तं वपुर्जीवयेत्। यथाग्निना प्लुष्टं वनं दिव्याम्बु जीवयेत्। तस्य च क्षीणस्य क्षीरं काले विकल्प्य दोषादीन् युञ्जीत। अतोऽन्यथा विपरीते विषये प्रयुक्तं क्षीरं ज्वरिणं हन्ति ॥

पयः सशुण्ठीखर्जूरमृद्वीकाशर्कराघृतम् ॥ ११० ॥
शृतशीतं मधुयुतं तृड्दाहज्वरनाशनम्।
तद्वत् द्राक्षाबलायष्टीशारिवाकणचन्दनैः ॥ १११ ॥
चतुर्गुणेनाम्भसा वा पिप्पल्या वा शृतं पिबेत्।
कासाच्छ्वासाच्छिरश्शूलात्पार्श्वशूलाच्चिरज्वरात् ॥ ११२ ॥
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः।
शृतमेरण्डमूलेन बालबिल्वेन वा ज्वरात् ॥ ११३ ॥
धारोष्णं वा पयः पीत्वा विबद्धानिलवर्चसः।
सरक्तपिच्छातिसृतेः सतृट्छूलप्रवाहिकात् ॥ ११४ ॥
सिद्धं शुण्ठीबलाव्याघ्रीगोकण्टकगुडैः पयः।
शोफमूत्रशकृद्वातविबन्धज्वरकासजित् ॥ ११५ ॥
वृश्चीवबिल्ववर्षाभूसाधितं ज्वरशोफनुत्।
शिंशिपासारसिद्धं वा क्षीरमाशु ज्वरापहम् ॥ ११६ ॥

सर्वाङ्गसुन्दरी

पय इत्यादि ॥ क्षीरं शुण्ठ्यादियुतं शृतमनन्तरं शीतं मधुयुतं तृड्दाहज्वरहृत् ॥

तद्वदिति। तेन पूर्वोक्तेन पयसा तुल्यं तद्वत्। यथा पूर्वोक्तं शृतशीतं मधुयुतं तृड्दाहज्वरहृत्तथा द्राक्षादिभिः शृतमनन्तरं शीतं मधुयुतं तृडादिजिदित्यर्थः। अथवा क्षीरं चतुर्गुणेन जलेन शृतं पिबेत्। अथवा पिप्पल्या शृतं पिबेत् ॥

पञ्चमूलेन शृतं क्षीरं पीत्वा कासादिभ्यो मुच्यते। मुच्यत इति कर्मकर्तरि तङ्। चिरज्वरो दीर्घकालानुबन्धी ज्वरः॥

एरण्डमूलेन शृतमथवा बालबिल्वेन शृतमथवा धारोष्णं क्षीरं पीत्वा पुरुषो ज्वरान्मुच्यते। किंभूताज्ज्वरात्—विबद्धानिलवर्चसः। विबद्धे विशेषेण बद्धे अनिलवर्चसी यस्मिन् ज्वरे सः विबद्धानिलवर्चास्तस्मात्तादृशाज्ज्वरान्मुच्यते। तथा रक्तं च पिच्छा च रक्तपिच्छे ताभ्यामुपलक्षिता अतिसृतिरतिसारः, सह तया वर्तते यस्तस्मात्तथाविधाज्ज्वरात्, तथा सह तृषा तथा शूलेन तथा प्रवाहिकया निश्चारकापरसंज्ञया वर्तते यस्तस्मात्तथाविधाज्ज्वरान्मुच्यते॥

शुण्ठ्यादिभिः सिद्धं पयः शोफादिजित्। वृश्चीवादिभिः साधितं पयो ज्वरशोफनुत्। वृश्चीवः सूक्ष्मपुनर्नवः। स्थूलपुनर्नवस्तु वर्षाभूः। पुनर्नवद्वयं बिल्वं चात्र योज्यम्। शिंशिपासारेण सिद्धं शृतं क्षीरमुपयुक्तमाशु नचिरेण ज्वरहृत्। क्षीरस्य श्रपणे विधिरतीसारचिकित्सितोक्तः। "पयस्युत्क्वाथ्य मुस्तानां विंशतिम्" इत्यनुसारेण कल्प्यः। तन्त्रान्तरे त्वेवमुक्तम्—"द्रव्या-दष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम्। क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः"॥ इति। ननु किं वातपित्तोत्तरे ज्वरे घृतं प्रधानमाश्रीयतां पूर्ववचन-प्रामाण्यात्, अथवा क्षीरं प्रधानमेतद्वचनप्रामाण्यादित्यत्र संशयः। अत्रोच्यते—उभयमपीद घृतं क्षीरं च वातपित्तोत्तरे ज्वरे प्रधानमवस्थावशात्सात्म्यवशाच्च क्वचि-त्किंचिदुपयुज्यते॥

**शशिलेखा**

सशुण्ठ्यादिकं पयः शृतमनु च शीतं मधुयुक्तं च तृडादिनाशनम्। शुण्ठ्यादीनां परस्परसमानां नातिव्याप्तिः। द्राक्षादिभिः पयस्तद्वच्छृतं शीतं मधुयुक्तं तृडादिनाशनमिति। अथवा विकल्प्य केवलेनैव क्षीराच्चतुर्गुणेनैवाम्भसा सिद्धं पिबेत्। अथवा पिप्पल्या सिद्धम्। पञ्चमूलशृतं पयः पीत्वा कासादिभ्यो मुच्यते। एरण्डमूलादिना शृतं पयः पीत्वा ज्वरान्मुच्यत इति सम्बन्धः। किंभूतादाह—विबद्धानिलवर्चसः सरक्ताद्यतिसृत्यादेश्च शुण्ठ्यादियिः सिद्धं पयो ज्वरिणश्शोफादिजित्। व्याघ्री कण्टकारिका। त्रिकण्टको गोक्षुरकः। सुबोधम्। एका पुनर्नवा वृश्चीवो द्वितीया वर्षाभूः। सारः स्थिरमाभ्यन्तरं शिशिपाय। इति पय उक्तम्॥

निरूहस्तु बलं वह्निं विज्वरत्वं मुदं रुचिम् ।
दोषे युक्तः करोत्याशु पक्वे पक्वाशयं गते ॥ ११७ ॥
पित्तं वा कफपित्तं वा पक्वाशयगतं हरेत् ।
स्रंसनं त्रीनपि मलान् वस्तिः [1]पक्वाशयश्रितान् ॥ ११८ ॥
प्रक्षीणकफपित्तस्य त्रिकपृष्ठकटीग्रहे ।
दीप्ताग्नेर्बद्धशकृतः प्रयुञ्जीतानुवासनम् ॥ ११९ ॥

सर्वाङ्गसुन्दरी

**निरूहस्त्वित्यादि ॥** निरूहो युक्तो दोषे पक्वे तथा पक्वाशयं गते सति बलादीन् द्रागेव करोति । पित्तं वेत्यादि । पित्तं केवलं कफपित्तं वा पक्वाशयश्रितं स्रंसनं विरेचनं हरेत् । वस्तिः प्रयोजितः त्रीनपि मलान् वाताद्यान् हरेत् । कीदृशान् —पक्वाशयमाश्रितान् । प्रक्षीणेत्यादि । प्रक्षीणे कफपित्ते यस्य पुंसस्तथा दीप्ताग्नेर्बद्धवर्चसः त्रिकपृष्ठकटीग्रहे सति अनुवासनं प्रयुञ्जीत ॥

शशिलेखा

निरूह उच्यते । पक्वे दोषे पक्वाशयं गते च युक्तो निरूहो बलादिकमाशु करोति । तस्यैव विरेचनात् गुणातिशय उच्यते । स्रंसनं विरेचनम् । तत् परं पक्वाशयगतं पित्तमेव हरेत् । कफपित्तमेव वा । वस्तिः पुनस्त्रीनपि वातादीन् मलान् पक्वाशयाश्रयान् हरेत् । प्रक्षीण इत्यादिना प्रसङ्गेनानुवासनस्य स्नेहवस्तेर्ज्वरे विषयनिर्देशः क्रियते ॥

[2]पटोलनिम्बच्छदनकटुकाचतुरङ्गुलैः ।
स्थिराबलागोक्षुरकमदनोशीरवालकैः ॥ १२० ॥
पयस्यर्धोदके क्वाथं क्षीरशेषं विमिश्रितम् ।
कल्कितैर्मुस्तमदनकृष्णामधुकवत्सकैः ॥ १२१ ॥
वस्तिं मधुघृताभ्यां च पीडयेज्ज्वरनाशनम् ।

---

1 "पक्वाशयाश्रयान्" इति वा पाठः ।

2 കടുകാ=കടുകരോഹിണി. ചതുരംഗുലം=കണിക്കൊന്നവേരിന്മേൽ തൊലി. സ്ഥിരാ=മൂവ്വിലവേര്. മദനം=മലങ്കാരയ്ക്ക.

सर्वाङ्गसुन्दरी

**पटोलेत्यादि** ॥ पटोलादिभिः क्वाथं क्षीरे अर्धोदके क्षीरशेषं तथा मिश्रितं कल्कीकृतैर्मुस्तादिभिः मधुघृताभ्यां च विमिश्रितं युक्तं वस्तिं ज्वरनाशनं दद्यात् ॥

शशिलेखा

पटोलेत्यादिना निरूहा उच्यन्ते। अत्र पटोलाद्यौषधानि समानि, तेभ्यश्चाष्टगुणं क्षीरं ग्राह्यम्। तावज्जलं द्रव्याचतुर्गुणस्य क्वथितशेषस्य ग्रहणे प्राप्ते बाधकवचनं क्षीरशेषमिति। कल्कसर्पिर्मधूनि च "सर्वत्र चाष्टमं भागं कल्काद्भवति वा यथा। नात्यच्छसान्द्रता वस्तेः" इत्यादि प्रकारेण। पटोलनिम्बयोः छदनं पत्रम्। चतुरङ्गुलः आरग्वधः। स्थिरा सालपर्णी। कृष्णा पिप्पली॥

**चतस्रः पर्णिनीर्यष्टीफलोशीरनृपद्रुमान्** ॥ १२२ ॥
**क्वाथयेत् कल्कयेद्यष्टीशताह्वाफलिनीफलम्।**
**मुस्तं च वस्तिः सगुडक्षौद्रसर्पिर्ज्वरापहः** ॥ १२३ ॥

सर्वाङ्गसुन्दरी

**चतस्र इति** ॥ मुद्गपर्णी माषपर्णी सालपर्णी पृश्निपर्णीति चतस्रः पर्णिनीः यष्ट्यादींश्च क्वाथयेत्। फलं मदनफलम्। तथा यष्ट्यादीन् कल्कयेदित्येषः गुडादिसहितो वस्तिः ज्वरहृत् ॥

शशिलेखा

पर्णिन्यादिक्वाथे कल्कादिमानं वस्तिविधिप्रदर्शितम्। पर्णिन्यः सालपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी चेति चतस्रः। यष्टी मधुयष्टी फलं। मदनफलम्। नृपद्रुम आरग्वधः। शताह्वा शतपुष्पा। फलिनी गन्धप्रियङ्गुः॥

**जीवन्तीं मदनं मेदां पिप्पलीं मधुकं वचाम्।**
**ऋद्धिं रास्नां बलां विल्वं शतपुष्पां शतावरीम्** ॥ १२४ ॥
**पिष्ट्वा क्षीरं जलं सर्पिस्तैलं चैकत्र साधितम्।**
**ज्वरेऽनुवासनं दद्यात्तथा स्नेहं यथामलम्** ॥ १२५ ॥
**ये च सिद्धिषु वक्ष्यन्ते वस्तयो ज्वरनाशनाः।**

सर्वाङ्गसुन्दरी

जीवन्तीमित्यादि ॥ जीवन्त्यादीनि द्रव्याणि स्नेहाच्चतुर्भागमात्राणि जलेन पिष्ट्वा क्षीरं स्नेहसमं, जलं च तैलसर्पिर्द्रव्याच्चतुर्गुणमित्येकत्र साधितं पक्कमेतत् ज्वरेऽनुवासनं दद्यात्। तथास्नेहं यथामलं यो यस्मिन् ज्वरे दोषे वातादौ यः स्नेहो योग्यस्तं तत्र दद्यात्। ये च वस्तयः सिद्धिषु वस्तिकल्पाध्याये वक्ष्यन्ते, ज्वरनाशनास्ते च देया इति शेषः ॥

शशिलेखा

जीवन्त्याद्ये क्षीरजलसर्पिस्तैलानां समानम्। स्नेहाच्चतुर्थांशः पिष्टानाम्। तथास्नेहं यथामलमित्यनेनैतदुच्यते—दोषमधिकं ज्वरे ज्ञात्वा कदाचित् सर्पिरधिकमत्र कुर्यात्। कदाचित्तैलम्। सिद्धिषु वस्तिकल्पाध्याये च ये ज्वरनाशना वस्तयो वक्ष्यन्ते तानपि ज्वरे दद्यादिति ॥

शिरोरुग्गौरवश्लेष्महरमिन्द्रियबोधनम् ॥ १२६ ॥
जीर्णज्वरे रुचिकरं दद्यान्नस्यं विरेचनम्
स्नैहिकं शून्यशिरसो दाहार्ते पित्तनाशनम् ॥ १२७ ॥
धूमगण्डूषकबलान् यथादोषं च कल्पयेत्।
प्रतिश्यायास्यवैरस्यशिरःकण्ठामयापहान् ॥ १२८ ॥

सर्वाङ्गसुन्दरी

शिरोरुगित्यादि ॥ जीर्णज्वरे विरेचनाख्यं नस्यं दद्यात्। कीदृशम्—शिरसो रुजं गौरवं श्लेष्माणं च हरति यत्, तथेन्द्रियाणां चक्षुरादीनां प्रबोधनम्। तथा रुचिकृत्। शून्यशिरसः पुंसः स्नैहिकं स्नेहेन निर्वृत्तं स्निग्धं नस्यं दद्यात्। दाहार्ते शिरसि पित्तहरं नस्यं दद्यात्। धूमादींश्च यथादोषं कल्पयेत्। किंभूतान्—प्रतिश्यायादिघ्नान् ॥

शशिलेखा

तथा जीर्णज्वरे अवस्थाविशेषज्ञो भिषक् विरेचनं नाम नस्यविधिप्रदर्शितं नस्यं दद्यात्। तद्धि जीर्णज्वरवतः शिरोरुगादिहरमिन्द्रियपाटवं रुचिं च करोति। यो हि जीर्णज्वरवान् श्लेष्मणः क्षीणत्वात् शून्यशिरास्तस्य स्नैहिकं नाम नस्यं

दद्यात्। स्नैहिकं बृंहणम्। दाहेनार्ते पित्तनाशनं शमनं नस्यम्। तथा जीर्णज्वरे कुपितदोषापेक्षया धूमादीनपि कल्पयेत्। ते हि तस्य प्रतिश्यायादिहराः॥

अरुचौ मातुलुङ्गस्य केसरं साज्यसैन्धवम्।
द्राक्षाधात्रीसितानां वा कल्कमास्येन धारयेत् ॥ १२९ ॥

सर्वाङ्गसुन्दरी

**अरुचौ इत्यादि**॥ अरुचौ सत्यां बीजपूरकस्य केसरं सघृतसैन्धवमास्येन धारयेदिति सम्बन्धः। अथवा द्राक्षादीनां कल्कं धारयेत्॥

शशिलेखा

जीर्णज्वरेऽरुचौ सत्यां मातुलुङ्गकेसरं घृतसैन्धवयुक्तमास्येन धारयेत्। द्राक्षादिकल्कं वा॥

यथोपशयसंस्पर्शान् शीतोष्णद्रव्यकल्पितान्।
अभ्यङ्गालेपसेकादीन् ज्वरे जीर्णे त्वगाश्रिते ॥ १३० ॥
कुर्याद[1]ञ्जनधूपांश्च तथैवागन्तुजेऽपि तान्।

सर्वाङ्गसुन्दरी

**यथोपशयेत्यादि**॥ त्वगाश्रिते जीर्णे ज्वरे अभ्यङ्गादीन् कुर्यात्। किंभूतान्—यथोपशयं यथासुखावहं स्पर्शो येषां तांस्तथा। शीतवीर्यैरुष्णवीर्यैश्च द्रव्यैः कल्पितान् योजितान्। तथा अञ्जनधूपादींश्च कुर्यात्। अञ्जनधूपानागन्तुजे ज्वरेऽपि तथैव कुर्यात। सामान्योक्तत्वादागन्तुजे ज्वरेप्येते अनिषिद्धा एवेति। तानिति पुनः कृतमतिशयार्थम्। विशेषेणागन्तुजे ज्वरे भूतविषाद्युद्भवे तान् कुर्यादित्यर्थः॥

शशिलेखा

यश्च जीर्णो ज्वरस्त्वचमाश्रित्य वर्तते, तत्राभ्यङ्गादीन् कुर्यात्। किंभूतानाह—यथोपशयसंस्पर्शान् य एव संस्पर्श उपशेते शीतो वा उष्णो वा

---

1 "कुर्यादञ्जनधूमांश्च" इति वा पाठः। तत्र धूमो धूमपानम्।

तेन युक्तान्। तथा कदाचिच्छीतद्रव्यकल्पितान् कदाचिदुष्णद्रव्यकल्पितान्। अञ्जनधूपांश्च त्वगाश्रिते कुर्यात्। आगन्तुजेऽपि ज्वरे तथैव यथोपशयेत्यादिना तानित्यभ्यङ्गादीन् योजयेदिति॥

**दाहे सहस्रधौतेन सर्पिषाभ्यङ्गमाचरेत् ॥ १३१ ॥**

सर्वाङ्गसुन्दरी

**दाह इत्यादि॥** दाहे दाहज्वरे सर्पिषा सहस्रधौतेनाभ्यङ्गमाचरेत्॥

शशिलेखा

दाह इत्यादिना दाहज्वरचिकित्सा। सहस्रधौतं सर्पिर्यत्तापितं तापितं शीतोदकेन शतशः स्त्यानीक्रियते॥

**सूत्रोक्तैश्च गणैस्तैस्तैर्मधुराम्लकषायकैः।**
**दूर्वादिभिर्वा पित्तघ्नैः शोधनादिगणोदितैः ॥ १३२ ॥**
**शीतवीर्यैर्हिमस्पर्शैः क्वाथकल्कीकृतैः पचेत्।**
**तैलं सक्षीरमभ्यङ्गात्सद्यो दाहज्वरापहम् ॥ १३३ ॥**

सर्वाङ्गसुन्दरी

**सूत्रोक्तैरित्यादि॥** सूत्रोक्तैः सूत्रस्थानोदितैः मधुराम्लकषायकैर्गणैः। तत्र मधुरो गणः "घृतहेमे"त्यादिः। अम्लो गणो "धात्रीफलाम्लीके" त्यादिः। कषायो गणः "पथ्याक्ष" इत्यादिः। तैस्तैर्मधुराम्लकषायकैर्वर्गैस्तथा दूर्वादिभिर्गणैः "दूर्वानन्ता" इत्यादिनिर्दिष्ट एकः। न्यग्रोधादिर्द्वितीयः। तृतीयस्तु "पद्मकपुण्ड्रावित्यादिः। चतुर्थः "शारिबोशीरे"त्यादिः। एतैः पूर्वोक्तैर्गणैः पित्तघ्नैः शोधनादिगणसंग्रहोक्तैः शीतवीर्यैः हिमस्पर्शैः वीर्यतः स्पर्शतश्च शीतैर्गणैरक्वाथाः क्वाथाः कृताः अकल्काः कल्काः कृताः तैः क्वाथकल्कीकृतैर्गणैस्तैलं क्षीरेण सह पचेत्। तच्चाभ्यङ्गान्म्रक्षणात् सद्यो न चिरेण कालेन दाहज्वरं जयेत्॥

शशिलेखा

सूत्रस्थानोक्तैस्तैस्तैर्मधुरादिगणैरित्येवमादिभिः क्वाथकल्कीकृतैस्तैलं पचेदिति सम्बध्यते। "घृतहेमे"त्यादिर्मधुरो गणः। "धात्रीफलाम्लीके"

त्यादिकोऽम्लः । "पथ्याक्ष.. शिरीषे" त्यादिः कषायः । शोधनादिगणार्न्ध्यायोक्तानि "दूर्वानन्तानिम्बे"त्यादीनि पित्त [illegible] नि येषामेव क्वाथपरिभाषया क्वाथस्तेषामेव कल्कपरिभाषया कल्कः । क्षीर तैलसमम् ॥

शिरोगात्रं च तैरेव नातिपिष्टैः प्रलेपयेत् ।

सर्वाङ्गसुन्दरी

शिर इत्यादि ॥ न केवलमेतैर्गणैस्तैलं पचेद्दाहज्वरशान्त्यै यावत्तैरेव शिरो मूर्धानं गात्रं च नातिपिष्टैः किंचित्पिष्टैः प्रलेपयेत् । सुपिष्टैस्तु तैः प्रत्युत दाह उत्पद्यते । तथा चोक्तम्—"श्लक्ष्णपिष्टघनो लेपः चन्दनस्यापि दाहकृत् । त्वग्गतस्योष्मणो रोधाच्छीतकृत्त्वन्यथाऽगुरोः" इति । अनेनैवाभिप्रायेण शीतज्वरे वक्ष्यति । "तैः सुपिष्टैश्च लेपयेत्"इति । गात्रग्रहणेनैव शिरोग्रहणे लब्धे पुनः शिरोग्रहणं विशेषार्थम् । विशेषेण शिरो लेपयेत्तस्य विशेषेण ज्वराश्रयत्वात् । तथा चोक्तम्—"विमुक्तस्यापि हि शिरो ज्वरो यस्य न मुञ्चति । अविमुक्तः स विज्ञेयो ज्वरः पुनरुपैति त"मिति । तस्माच्छिरसो विशेषेण लेपनार्थं पृथगुपादानम् ॥

शशिलेखा

यान्येव द्रव्याणि तैलसाधनायोक्तानि तैरेव नातिश्लक्ष्णपिष्टैर्दाहे शिरो गात्रं च लेपयेत् ॥

तत्क्वाथेन परीषेकमवगाहं च योजयेत् ॥ १३४ ॥
तथाऽरनालसलिलक्षीरशुक्तघृतादिभिः ।

तेषां गणानां क्वाथस्तत्क्वाथस्तेन परीषेकमवगाहं च योजयेत् । तथारनालादिभिः परीषेकादि योजयेत् ।

तेषामेव क्वाथेन परीषेकमवगाहं च योजयेत् । तथैवारनालादिभिः परीषेकमवगाहं च ।

[1]कपित्थमातुलुङ्गाम्लविदारीलोध्रदाडिमैः ॥ १३५ ॥

1. മാതുലുംഗം = വള്ളിനാരങ്ങ (ഗണപതിനാരങ്ങ); അമ്ലം = ഞെരിഞ്ഞാമ്പുളിക്കിഴങ്ങ്; ഡാഡിമം = മാതളനാരങ്ങ.

बदरीपल्लवोत्थेन फेनेनारिष्टजेन वा ।
लिप्तेऽङ्गे दाहरुङ्मोहाश्छर्दिस्तृष्णा च शाम्यति ॥ १३६ ॥

सर्वाङ्गसुन्दरी

कपित्थादिभिर्बदरीपल्लवोत्थेन फेनेन निम्बपल्लवोत्थेन फेनेन वा लिप्तेऽङ्गे सति दाहादयः शाम्यन्ति ॥

शशिलेखा

कपित्थादिभिर्यथादोषादि यथालाभं च व्यस्तैः समस्तैर्वाङ्गे लिप्ते दाहादिकं शाम्यति । अम्लो ऽम्लवेतसः । बदरीपत्राणामम्लानां च मुसलक्षुण्णानां फेन उद्गच्छति । अरिष्टको निम्बः । सुबोधम् ॥

यो वर्णितः पित्तहरो दोषोपक्रमणे क्रमः ।
तं च शीलयतः शीघ्रं सदाहो नश्यति ज्वरः ॥ १३७ ॥

सर्वाङ्गसुन्दरी

यश्च दोषोपक्रमणीयाध्याये पित्तहरः क्रमो वर्णितः उक्तस्तं च क्रमं शीलयतोऽभ्यसतो ज्वरो दाहेन सह नश्यति ॥

शीतज्वरचिकित्सामाह—

वीर्योष्णैरुष्णसंस्पर्शैस्तगरागरुकुङ्कुमैः ।
कुष्ठस्थौणेयशैलेयसरलामरदारुभिः ॥ १३८ ॥

नखरास्नापुरवचाचण्डेलाद्वयचोरकैः ।
पृथ्वीकाशिग्रुसुरसाहिंस्राध्यामकसर्षपैः ॥ १३९ ॥

दशमूलामृतैरण्डद्वयपत्तूररोहिषैः ।
तमालपत्रभूतीकसल्लकीधान्यदीप्यकैः ॥ १४० ॥
मिसिमाषकुलत्थाग्निप्रकीर्यानाकुलीद्वयैः ।
अन्यैश्च तद्विधैर्द्रव्यैः शीते तैलं ज्वरे पचेत् ॥ १४१ ॥

क्वथितैः कल्कितैर्युक्तैः सुरासौवीरकादिभिः ।
तेनाभ्यज्यात्सुखोष्णेन



सर्वाङ्गसुन्दरी

वीर्योष्णैरित्यादि ।। वीर्योष्णैरुष्णसंस्पर्शैरुभयथा वीर्यतः स्पर्शतश्चोष्णैस्तगरादिभिर्द्रव्यैरपरैरपि तद्विधैरुष्णवीर्यैरुष्णस्पर्शैश्च क्वाथीकृतैः कल्कीकृतैस्तथा सुरादिभिरम्लपाकरसैः शीतज्वर एतद्विषये तैलं पचेत्। तेन तैलेन सुखोष्णेनाभ्यज्यात् म्रक्षयेत् ॥

शशिलेखा

वीर्योष्णैरित्यादिना शीतज्वरचिकित्सा। तगरादिभिरन्यैश्च वीर्ये स्पर्शे चोष्णैः कथितैस्तैरेव च कल्कितैः सुरासौवीरकादियुक्तैः शीते ज्वरे तैलं पचेत्। तेन तैलेनाभ्यज्यात्। "पृथक् स्नेहसमं कुर्यात् पञ्चप्रभृति तु द्रवम्"। सुरादिकं चाम्लं यथालाभं प्रयुञ्जीत। नद्र्यादिकं द्रवं मिश्रीभूतं स्नेहसमम्। तैरिति तगरादिभिः। स्थौणेयम्। "चारटीशुकबर्हाख्यं स्थौणेयं तैलपीतकम्"। पुरो गुल्गुलुः। पृथ्वीका हिङ्गुपत्रिका। हिंस्रा मांसी। पत्तूरो मत्स्याक्षको जलशाकः। रोहिषो भूतीकम्। सल्लकी सुरभिः। मोचा महेरुण्यश्च मूलिका चेति पर्यायाः। दीप्यकोऽजमोजः। मिसिः शतपुष्पा। प्रकीर्या पूतिकरजः। नाकुली सर्पसुगन्धा ॥

— तैः सुपिष्टैश्च लेपयेत् ॥ १४२ ॥

कवोष्णैस्तैः परीषेकमवगाहं च कल्पयेत्।
केवलैरपि तद्वच्च शुक्तगोमूत्रमस्तुभिः ॥ १४३ ॥
आरग्वधादिवर्गं च पानाभ्यञ्जनलेपने।
धूपानगरुजान् ये च वक्ष्यन्ते विषमज्वरे ॥ १४४ ॥

सर्वाङ्गसुन्दरी

तैश्च पूर्वोक्तैर्द्रव्यैः सुपिष्टैरतिश्लक्ष्णपिष्टैः किंचिदुष्णैरालेपयेत्। तैश्च परिषेकमवगाहं च कल्पयेद्योजयेत्। तद्वच्च तथैव शुक्तादिभिः केवलैश्च परिषेकादि कल्पयेत्। आरग्वधेन्द्रयवेत्यादिवर्गं च पानाभ्यञ्जनलेपने कल्पयेत्। अगरुजान् धूपान् ये च धूपा विषमज्वरे वक्ष्यन्ते तांश्च कल्पयेत् ॥

शशिलेखा

शुक्तादिभिः केवलैः द्रव्यरहितैरपि तद्वत् परिषेकमवगाहं च योजयेदि



त्यर्थः । "आरग्वधेन्द्रयवपाटली" त्यादिवर्गं पानाद्यन्यतमया कल्पनया योजयेत् । अभ्यञ्जनं तेन पक्कं तैलम् । लेपने स एव जलपिष्टः । अगरुजो धूपः शीतज्वरे हितः । ये च धूपा विषमज्वरे वक्ष्यन्ते "पलंकषे" त्यादिना, तानपि शीतज्वरे योजयेत् ॥

अग्न्यनग्निकृतान् स्वेदान् स्वेदि भेषजभोजनम् ।
गर्भभूवेश्मशयनं कुथकम्बलरल्लकान् ॥ १४५ ॥

निर्धूमदीप्तै[1]रङ्गारैर्हसन्तींश्च हसन्तिकाः ।
मद्यं सत्र्यूषणं तक्रं कुलत्थव्रीहिकोद्रवान् ॥ १४६ ॥

संशीलयेद्वेपथुमान् यच्चाऽन्यदपि पित्तलम् ।
दयिताः स्तनशालिन्यः पीना विभ्रमभूषणाः ॥ १४७ ॥

यौवनासवमत्ताश्च तमालिङ्गेयुरङ्गनाः ।
वीतशीतं च विज्ञाय तास्ततोऽपनयेत्पुनः ॥ १४८ ॥

सर्वाङ्गसुन्दरी

तथा स्वेदान् शीलयेत् । किंभूतान्—अग्निकृताननग्निकृतांश्च स्वेदविध्युक्तान् । तथा स्वेदयति साधु इति स्वेदि, स्वेदि यत् भेषजं भोजनं च तच्च संशीलयेत् । तथा गर्भे गृहाभ्यन्तरे यत् भूवेश्म भूमिगृहं तत्र शयनं शय्याम् । तथा कुथादीनावरणविशेषांस्तथा हसन्तिकाः वह्निशकटिकाः शीलयेत् । किंभूताः—निर्धूमदीप्तैरङ्गारैर्हसन्तीरिव तथा मद्यादींश्च शीलयेत् । वेपथुमान् जातशीतकम्पः सन् यच्चापरं पित्तलं वस्तु, तच्च सेवेत । तं च वेपथुमन्तमङ्गना आलिङ्गेयुर्दयितादिगुणयुक्ताः । गतशीतं च विदित्वा ततस्ता योषितः पुनरपनयेत् । एतच्चानुब्रुवंस्ताभिः संभोगाभिलाषं निवारयति ॥

शशिलेखा

अनग्निकृताः स्वेदाः निवातगृहादयः । हसन्तीव दीप्तत्वात् । हसन्ती हसन्तिका अङ्गारशकटी । त्र्यूषणं मरिचं पिप्पली शुण्ठी च । वेपथुः शीतेन प्रकम्पः । सुबोधम् ॥

---

1 दीप्तैरिति वा पाठः ।

अधुना सन्निपातचिकित्सितं ब्रूते—

**वर्धनेनैकदोषस्य क्षपणेनोच्छ्रितस्य वा ।**
**कफस्थानानुपूर्व्या वा तुल्यकक्षान् जयेन्मलान् ॥ १४९ ॥**

सर्वाङ्गसुन्दरी

**वर्धनेनेत्यादि ॥** हीनाधिकभावत्वेन विषमदोषजे सन्निपातज्वरे वर्धनेनैकदोषस्यार्थात्क्षीणस्य क्षीणयोर्वा, अथवोच्छ्रितस्योच्छ्रितयोर्वा क्षपणेन देशकालादिवशान्मलान् जयेत् । ननु विषमदोषजे सन्निपाते वर्धनमेकदोषस्यायुक्तम् । यतः संनिपातज्वरकारिणो दोषस्य क्षपणेनैव संनिपातज्वरस्योपशान्तिः तस्माद्वर्धनमयुक्तम् । अत्राचक्ष्महे—सन्निपातस्थेन क्षीणेन दोषेण सह यावान्यावक्षीणौ दोषौ ज्वरकारिणौ न तौ सुखेन जेतुं शक्येते, विषमाश्रयत्वात् । क्षीणस्य तु दोषस्य वर्धनेन दोषसात्म्यमुत्पाद्यैकरूपया क्रियया सन्निपातः सुखेन जेतुं शक्यते । तस्माद्वर्धनेनैकदोषस्येति वक्तुं युक्तम् । तथा च वाताख्ये यतो दोषे क्षीणे शीतलघुरूक्षादिरूपैर्द्रव्यैर्वृद्धिर्भवति । वर्धनेन च तत्रस्थौ पित्तकफावप्येवं प्रायेण किंचित् क्षयं यातः तत्क्षयाच्चासौ ज्वरोपि मृदुतां गतः सुखेन शक्यते जेतुम् । तथैव पित्ताख्यस्य दोषस्य सन्निपातस्थस्य ज्वरघ्नया तीक्ष्णोष्णकटुरूपया क्रियया वर्धनेन तत्रस्थौ वातकफावपि किंचित् क्षयं यातः । तत्क्षयाच्च ज्वरोऽप्यसौ मृदुतां गतः सुखेन जेतुं शक्यते । एवं कफाख्यस्य दोषस्य सन्निपातस्थस्य ज्वरघ्नया स्निग्धमधुरशीतादिकया क्रियया वर्धनेन तत्रस्थौ वातपित्ताख्यौ दोषौ किंचित् क्षयं यातः । तत्क्षयाच्च ज्वरोऽप्यसौ मार्दवं गतः सुखेन जेतव्य इत्येवं दोषत्रयस्यापि ज्वरकारिणोऽनया युक्त्या प्रतीकारः कृतो भवति । एवमुच्छ्रितस्यापि क्षपणेनैकरूपया क्रियया सुखेन संनिपातो जीयते । तदेवं द्व्युल्बणैरेकोल्बणैर्दोषैर्जनिते सन्निपाते चिकित्साक्रम उक्तः । संप्रति समदोषजे सन्निपाते चिकित्साक्रमं दर्शयितुमाह—कफेत्यादि । स्थितिः स्थानम् । कफश्च स्थानं च कफस्थाने । तयोरानुपूर्वी क्रमस्तया च तुल्यकक्षान् समान् संनिपातज्वरे मलान् जयेत् । तत्र कफः प्राग्जेतव्यः । ततः पित्तं ततो वायुरिति कफानुपूर्वीत्युच्यते । उक्तञ्च—"स्थानतः केचिदिच्छन्ति प्राक् तावच्छ्लेष्मणो वधम् । शिरस्युरसि कण्ठे च प्रलिप्तेऽन्नरुचिः कुतः ॥ तदभावे कथं भोज्यपानद्रव्यावचारणम् । असत्यभ्यवहारे च कुतो दोषविनिग्रहः ॥ तस्मादादौ कफो घात्यः कायद्वारार्गलो हि सः । मध्यस्थायि यतः पित्तमाशुकारि च चिन्त्यते ॥ अतो वातसखस्यास्य कुर्यात्तदनु निग्रहम् ।

अधःस्थायी च तदनु निग्राह्यः स्यात्समीरणः ॥" इति। सुश्रुतस्त्वाह—"जयेज्ज्वरेऽतिसारे च क्रमात्पित्तकफानिलान्। प्रायेण तापात्मतया ज्वरे तेजो विशिष्यते॥ विशश्च सरता पित्तात्तथा च मृदुकोष्ठता। तस्य चानुबलः श्लेष्मा गौरवापक्तिजाड्यकृत्॥ वायुश्च वर्धतेऽवश्यं येष्वहस्सु तयोः क्षयः। ज्वरातिसारयोस्तस्मादेष दोषजये क्रमः॥ कफपित्तानिलानन्ये क्रमादाहुस्तयोरपि। यस्मादामाशयोत्क्लेशात् भूयिष्ठं तत्समुद्भवः॥ क्रमेणानेन तत्रापि प्रवृद्धान् स्वाशये स्थितान्। आमाशये प्रदुष्टानां स्थितैव ह्याशुकारिता। विज्ञाय कर्मभिः स्वैः स्वैर्दोषोद्रेकं यथामलम्॥ भेषजं योजयेत्तत्र तन्त्री[1] कुर्यान्न च क्रमम्" इति। अन्ये त्वाहुः—"क्रमान्मरुत्पित्तकफान् सर्वत्र सदृशे बले। वातादीनां यथापूर्वं यतः स्वाभाविकं बलम्॥ ऊचे पराशरोऽप्यर्थममुमेव प्रमाणयन्। यथोपन्यासतः प्राप्तमादौ दोषभिषग्जितम्॥ नेतृभङ्गेन दृष्टो हि सर्वसैन्यपराजयः" इति। स्थानानुपूर्व्या वा मलान् दोषांस्तुल्यकक्षाञ्जयेत्। स्थानं च यद्यप्यविशेषेणैव संभवति, तथापीह ज्वरकारिदोषप्रस्तावादामाशयो गृह्यते। तथा चोक्तम्—"आमाशयस्थो हत्वाग्निं सामो मार्गान्पिधाय यत्"इत्यादि। तेन आमाशयस्थो दोषः प्राग्जेतव्यः। ततः पक्वाशये स्थित इति स्थानानुपूर्वी। स्थानमाहात्म्याच्च चिकित्साक्रमोऽन्यादृशो दृष्टः। तथा च प्रागध्यगीष्ट—"आमाशयगते वायौ कफे पक्वाशयाश्रिते। रूक्षपूर्वं तथा स्नेहपूर्वं स्थानानुरोधतः" इति। तदेवं कफस्थानानुपूर्व्या वा तुल्यकक्षान्मलान् जयेत्। अन्ये त्वेवं व्याख्यानयन्ति। कफस्य स्थानं कफस्थानम्, कफस्थानलक्षणा चासावानुपूर्वी च तया कफस्थानानुपूर्व्या वा तुल्यकक्षान् मलान् जयेत्। यद्यपि कफस्थानानि कण्ठादीन्यपि, तथापीह ज्वरकारिदोषप्रस्तावादामाशयो गृह्यते। तथा चोक्तम्—"आमाशयस्थो हत्वाग्निं सामो मार्गान्पिधाय यत्। विदधाति ज्वरं दोषस्तस्मात्कुर्वीत लङ्घनम्" इति। तदेवं रूक्षोष्णपाचनादिक्रमोऽत्र कार्य इत्यवतिष्ठते। ननु कफस्थानानुपूर्व्या वेत्येतन्न वाच्यम्, यतस्तुल्यकालं त्रिदोषहरैर्द्रव्यैः सन्निपातस्योच्छित्तेः सन्ति हि द्रव्याणि त्रिदोषघ्नानीत्यत्रोच्यते। ज्वरनाशनानि द्रव्याणि त्रिदोषघ्नानि विरलानि। एकदोषघ्नानि पुनर्ज्वरहन्तॄणि त्रिदोषघ्नेभ्यः समर्थतराणि बहुतराणीति॥

---

1 तन्त्री तन्त्रज्ञः।

शशिलेखा

विषमदोषं समदोषं च सन्निपातमधिकृत्याह—वर्धनेत्यादि। विषमदोषमेकस्य दोषस्य वर्धनेन जयेत्। अथवा एकस्योच्छ्रितस्य क्षपणेन जयेत्। अथवा यत्र द्वावुच्छ्रितौ तत्रैको हीनः। यत्र द्वौ हीनौ तत्रैक उच्छ्रित इति। समदोषं तु कफस्थानानुपूर्व्या जयेत्। प्रथममेव कफविपरीतमौषधं युञ्ज्यात्। ततः पित्तविपरीतं ततो वातविपरीतमिति ॥

कफस्थानानुपूर्व्या वेत्युक्तम्। अपि च दोषकालादिवशाच्चिकित्साप्रकारान्तरोऽयमुपयुज्यत इति च। सन्निपातचिकित्साप्रक्रमादिदमप्याह—

**सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः।**
**शोफः सञ्जायते तेन कश्चिदेव विमुच्यते ॥ १५० ॥**

सर्वाङ्गसुन्दरी

**सन्निपादेत्यादि** ॥ सन्निपातज्वरस्यावसाने कर्णमूलप्रदेशे सुष्ठु दारुणः शोफः सञ्जायते। तेन शोफेनोत्पन्नेन कश्चिदेव विमुच्यते। कश्चिदेवेत्यनेनास्य रोगस्य नावश्यमसाध्यतेति ब्रूते ॥

शशिलेखा

सन्निपातज्वरस्यान्ते सन्निपातज्वरेण क्षपिते शरिरे पुरुषस्य कर्णमूले सुदारुणः शोफः संप्राप्तिविशेषवशाज्जायते। तेन शोफेन कश्चिदेव विमुच्यते। प्रायो मारयतीत्यर्थः ॥

अत एव चिकित्सामत्राह—

**रक्तावसेचनैः शीघ्रं सर्पिष्पानैश्च तं जयेत्।**
**प्रदेहैः कफपित्तघ्नैर्नावनैः कवलग्रहैः ॥ १५१ ॥**

सर्वाङ्गसुन्दरी

**रक्तेत्यादि** ॥ रक्तावसेचनादिभिः कवलग्रहान्तैराशु तं जयेत्। प्रदेहाः प्रलेपाः ॥




शशिलेखा

तस्मात्तं शोफं रक्तावसेचनादिभिः कवलग्रहान्तैः शीघ्रं जयेत् ॥

शीतोष्णस्निग्धरूक्षाद्यैर्ज्वरो यस्य न शाम्यति ।
शाखानुसारी तस्याशु मुञ्चेद्बाह्वोः क्रमात् सिराम् ॥ १५२ ॥

सर्वाङ्गसुन्दरी

**शीतोष्णेत्यादि ॥** आदिग्रहणेन स्तम्भनस्वेदनादयो गृह्यन्ते । शीतोष्णादिभिरुपक्रमैर्यथायथं पृथग्वातपित्तश्लेष्मसंसर्गसन्निपातज्वरप्रशमनैः सम्यक् प्रयोजितैः ज्वरो यस्य नरस्य शमं न गच्छति, तस्य शाखानुसारित्वाद्धेतोः बाह्वोः क्रमादेकैकस्मिन्, न युगपत्, द्वयोर्भुजयोः सिरां मुञ्चेत् । शाखाशब्देनात्र केवलं रक्तं विवक्षितम् न मांसादयः । अत एव रक्तस्यैव चिकित्सामुवाच —मुञ्चेत्सिरामिति । मांसजानां हि शस्त्रक्षाराग्निकर्मादिका चिकित्सा । तस्माच्छाखाशब्देन सामर्थ्याद्रक्तस्यैव ग्रहणं युक्तम् ॥

शशिलेखा

यस्य पुंसः शाखानुसारी धात्वाश्रितो ज्वरो रक्तावसेचनाच्छेषेण शीतोष्णाद्युपक्रमेण न शाम्यति, तस्य बाह्वोः क्रमात्सिरां मुञ्चेत् । न तु द्वयोर्युगपत् ॥

अयमेव विधिः कार्यो विषमेऽपि यथायथम् ।
ज्वरे विभज्य वातादीन् यश्चानन्तरमुच्यते ॥ १५३ ॥

सर्वाङ्गसुन्दरी

**अयमिति ॥** अयमेव पूर्वोक्तो विधिर्विषमज्वरे सततकादौ यथास्वं वातादीन्विभज्य कार्यः । अनन्तरमधुनैव यो विधिरुच्यते पटोलकटुकादिः, सोपि विषमज्वरे कार्यः ॥

शशिलेखा

तथा य एव विधिः पूर्वमुक्तः, स एव विषमे सततकादिके वातादिदोषविशेषकोपवशेन यथात्मीयः कार्यः । यश्च विधिरनन्तरमुच्यते सोऽपि कार्यः ॥

पटोलकटुकामुस्ताप्राणदामधुकैः कृताः ।
त्रिचतुःपञ्चशः क्वाथा विषमज्वरनाशनाः ॥ १५४ ॥

योजयेत्त्रिफलां पथ्यां गुलूचीं पिप्पलीं पृथक् ।

सर्वाङ्गसुन्दरी

पटोलादिभिः त्रिभिश्चतुर्भिः पञ्चभिर्वा कृताः क्वाथाः विषमज्वरघ्नाः। त्रिफलां वा पथ्यां वा गुळूचीं वा पिप्पलीं वा पृथक् पृथग्योजयेत्। सततकादिके विषमज्वरे॥

शशिलेखा

पटोलेत्यादि सुबोधम्। तथा त्रिफलादिर्नानाविधैर्विधानैः पृथग्योजयेत्॥

कदाचिद्दोषाद्यपेक्षया विषमज्वरे त्रिफला। कदाचिद्धरीतकी। कदाचिद्गुळूची। कदाचित् पिप्पलीति पृथक्छब्दार्थः सुबोधम्॥

**तैस्तैर्विधानैः सगुडैर्भल्लातकमथाऽपि वा ॥ १५५ ॥**
**लङ्घनं बृंहणं वादौ ज्वरागमनवासरे ।**

सर्वाङ्गसुन्दरी

**तैस्तैरित्यादि॥** अथवा तैस्तै रसायनाद्युक्तैर्विधिभिर्गुडसहितं भल्लातकं वा योजयेत्। यदि वा ज्वरागमनदिवसे आदौ प्रथमं लङ्घनं बृंहणं वा योजयेत्॥

शशिलेखा

तथा विषमे सततकादिचतुष्टये यस्मिन् दिने ज्वर आगच्छति तस्मिन् लङ्घनं वोपक्रमं बृंहणं वा कुर्वीत दोषाद्यपेक्षया। सुबोधम्॥

**प्रातः सतैलं लशुनं प्राग्भक्तं वा तथा घृतम् ॥ १५६ ॥**

**जीर्णं तद्वद्दधिपयस्तक्रं सर्पिश्च षट्पलम् ।**
**कल्याणकं पञ्चगव्यं तिक्ताख्यं वृषसाधितम् ॥ १५७ ॥**

सर्वाङ्गसुन्दरी

**प्रात इत्यादि॥** प्रातः प्रगे सह तैलेन लशुनं योजयेत्। प्राग्भक्तमित्यादि। भक्तात् पूर्वं प्रातर्वा घृतञ्च जीर्णं पुराणं योजयेत्। तथैव दधि तथा पयस्तथा तक्रं षट्पलञ्च सर्पिः क्षयचिकित्सितोक्तं प्रातः प्राग्भक्तं वा योजयेदित्यर्थः। कल्याणकमुन्मादप्रतिषेधोक्तं पञ्चगव्यमपस्मारप्रतिषेधोक्तं तिक्ताख्यं कुष्ठचिकित्सितोक्तं वृषसाधितं रक्तपित्तचिकित्सितोक्तं प्रातः प्राग्भक्तं वा योजयेत्॥

शशिलेखा

घृतं जीर्णमिति संबध्यते। 'तथेति सतैलम्। तद्वदिति प्राग्भक्तं दध्यादिकं षट्पलादिकं सर्पिश्च। षट्पलं पञ्चकोलयवक्षारैः राजयक्ष्मचिकित्सितोक्तम्। कल्याणकमुन्मादे। पञ्चगव्यमपस्मारे। तिक्तकं कुष्ठे। वृषघृतं रक्तपित्ते॥

त्रिफलाकोलतर्कारीक्वाथे दध्ना शृतं घृतम्।
तिल्वकत्वक्कृतावापं विषमज्वरजित् परम् ॥ १५८ ॥

सर्वाङ्गसुन्दरी

त्रिफलेत्यादि॥ त्रिफलादिक्वाथे चतुर्गुणे सर्पिर्दधिसमं शाबरलोध्रत्वक्कृतावापमतिशयेन विषमज्वरजित्॥

शशिलेखा

त्रिफलादिक्वाथे घृताच्चतुर्गुणे दध्ना स्नेहसमेन पट्टिकालोध्रचूर्णस्य स्नेहाच्चतुर्थेनांशेन घृतं पचेत्॥

सुरां तीक्ष्णं च यन्मद्यं शिखितित्तिरिदक्षजम्।
मांसं मेध्योष्णवीर्यञ्च सहान्नेन प्रकामतः ॥ १५९ ॥
सेवित्वा तदहः स्वप्यादथवा पुनरुल्लिखेत्।

सर्वाङ्गसुन्दरी

सुरामित्यादि॥ सुरां तीक्ष्णं च यन्मद्यं शिखितित्तिरिदक्षज च मांसं मेध्योष्णवीर्यमन्नेन सह बहु सेवित्वा तदहः स्वप्यात्। यस्मिन् दिने तद्भुक्तम्, तं दिवसं शयीत। तदहः स्वप्यादिति। "कालाध्वनोरत्यन्तसंयोग" इति द्वितीया। अथवा पूर्वोक्तपीतभुक्तभक्तो नरः पुनरुल्लिखेदुद्वमेत्॥

शशिलेखा

तथा सुरादिकं सेवित्वा तदहः स्वप्यात्। अथवा तत् सेवित्वा वमेत्॥

सर्पिषो महतीं मात्रां पीत्वा वा छर्दयेत् पुनः ॥ १६० ॥

सर्वाङ्गसुन्दरी

सर्पिष इति॥ सर्पिषो वा महतीमुत्तमां मात्रां पीत्वा पुनश्छर्दयेदुद्वमेत्॥

शशिलेखा

घृतस्य वा महतीं मात्रामहोरात्रजरणलक्षणां पीत्वा छर्दयेत् ॥

नीलिनीमजगन्धाञ्च[1] त्रिवृतां कटुरोहिणीम् ।
पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादितः ॥ १६१ ॥

सर्वाङ्गसुन्दरी

नीलिनीमित्यादि ॥ नीलिन्यादीन् पृथक् ज्वरागमनवासरे कृतस्नेहस्वेदः पिबेत् ॥

शशिलेखा

ज्वरागमनदिवसे तु विषमज्वरेषु नीलिन्यादीन् जलेन पिबेत् । किंभूत आह—स्नेहस्वेदाभ्यां संस्कृतः ॥

मनोह्वा सैन्धवं कृष्णा तैलेन नयनाञ्जनम् ।
योज्यं हिङ्गुसमा व्याघ्रीवसा नस्यं ससैन्धवम्[2] ॥ १६२ ॥
पुराणसर्पिः सिंहस्य वसा तद्वत्ससैन्धवा ।

सर्वाङ्गसुन्दरी

मनोह्वादिकं तैलेन नयनाञ्जनं योज्यम् । अञ्जनशब्दो म्रक्षणेऽपि दृश्यत इति नयनशब्दोऽत्र प्रयुक्तः । हिङ्गुसमा व्याघ्रीवसा नस्यं ससैन्धवं योज्यम् । व्याघ्रीति स्त्रीलिङ्गे निर्देशः स्त्रिया ग्रहणार्थः । अचिन्त्यत्वात् प्रभावस्य । अन्यथा पुलिङ्गेनैव निर्देशं कुर्यात् । यथा वक्ति । "पुराणसर्पिः सिंहस्य वसा तद्वत्ससैन्धवे"ति ॥

शशिलेखा

व्याघ्रीवसा हिङ्गुसमा सैन्धवेन च स्तोकेन युक्ता नस्यम् । पुराणसर्पिः केवलमिति ॥

पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी ॥ १६३ ॥
सर्षपा सयवा सर्पिर्धूपो विड्वा विडालजा ।
पुरध्यामवचासर्जनिम्बार्कागरुदारुभिः ॥ १६४ ॥
धूपो ज्वरेषु सर्वेषु प्रयोक्तव्योऽपराजितः ।

---

1 നീലിനീ=വട്ടപ്പൂന്താളി. അജഗന്ധാ=ആടുനാറിവേള.

2 ससैन्धवा इति इन्दुः पठति ।

सर्वाङ्गसुन्दरी

पलङ्कषेत्यादि ॥ पलङ्कषादिधूपः सर्वेषु ज्वरेषु कार्यः। अथवा विडालज। विट्। पुरादिभिः सहाऽपराजिताख्योऽयं धूपो ज्वरेषु कार्यः॥

शशिलेखा

पलङ्कषादिकं घृताभ्यक्तं धूपः। विलालविट् केवला। पुरादिभिरपराजिताख्यो धूपः सर्वज्वरेषु कार्यः। पुरो गुग्गुलः॥

**धूपनस्याञ्जनोऽत्रासा ये चोक्ताश्चित्तवैकृते ॥ १६५ ॥**

सर्वाङ्गसुन्दरी

**धूप इत्यादि ॥** ये च चित्तवैकृते उन्मादापस्मारे धूपादय उक्तास्ते च विषमज्वरे योज्या इति। विकृतमेव। वैकृतम्। प्रज्ञादित्वात् स्वार्थेऽण्॥

शशिलेखा

पित्तवैकृतेच भूतोन्मादापस्मारेषु धूपादय उक्तास्तेऽपि ज्वरेषु योज्याः॥

**दैवाश्रयं च भैषज्यं ज्वरान् सर्वान् व्यपोहति।**
**विशेषाद्विषमान् प्रायस्तेह्यागन्त्वनुबन्धजाः ॥ १६६ ॥**

सर्वाङ्गसुन्दरी

**दैवाश्रयमित्यादि ॥** न केवलं धूपादयो ज्वरं नाशयन्ति। दैवाश्रयञ्चौषधं मणिमङ्गलबल्युपहारप्रायश्चित्तजपहोमादिकं सर्वान् ज्वरानागन्तून् निजांश्चव्यपोहति। उपसर्गादस्यत्यूह्योर्वावचनमिति तङ्भावः। विशेषेण विषमान् व्यपोहति। यस्मात्ते विषमज्वरा आगन्तूनां भूतादीनामनुबन्धाज्जाताः॥

शशिलेखा

दैवाश्रयं भैषज्यं मणिमन्त्रादि। विषमान् ज्वरान् तथान्यदौषधं व्यपोहति यथा दैवव्यपाश्रयम्, यतस्ते विषमाः प्रायेणागन्तोराभिचारग्रहावेशादेरनुबन्धेन जायन्ते। तत्र च बलवद्दैवव्यापाश्रयं कर्म॥

**यथास्वं च सिरां विध्येदशान्तौ विषमज्वरे।**

सर्वाङ्गसुन्दरी

**यथास्वमित्यादि** ॥ विषमज्वरे चाशान्तौ सत्यां यथास्वं दोषाद्यपेक्षया सिरां विध्येत् । संग्रहे च रसादिधातुस्थज्वरचिकित्सोक्ता । यथा—"रसस्थिते तु सर्वस्मिन् कुर्याद्वमनलङ्घने । सेकसंशमनालेपरक्तमोक्षानसृक्स्थिते" तीक्ष्णान् विरेकान् मांसस्थे मेदोघ्नं मेदसि स्थिते ॥ अस्थिस्थे वातशमनमभ्यङ्गस्वेदमर्दनम् । ज्वरे वातार्तिशमनं विशेषाद्बस्तिकर्म च ॥" मज्जस्थशुक्रस्थयोर्ज्वरयोरसाध्यत्वात् तत्र चिकित्सा नोक्ता ॥

शशिलेखा

विषमज्वरे च तीक्ष्णोष्णादिभिः सर्वथाऽशान्तौ यथास्वं सिरां विध्येत् । "तृतीयकेंऽसयोर्मध्ये स्कन्धस्याधश्चतुर्थके । बाह्वोश्च" त्यादि यथास्व शब्दार्थः। रससंस्थे प्राधान्येन वमनम् । अन्यद्यथायोग्यं लङ्घनम् । रक्तस्थे ज्वरहरान् सेकादीन् । सुबोधम् । मेदोघ्नं यत्किञ्चित् । अस्थिस्थे ज्वरे वातशमनमभ्यङ्गादिकं कुर्यात् । ज्वरे चान्यत्र तथा वातार्तिशमनम्, यथा बस्तिरतस्तमपि कुर्यात् । मज्जशुक्रस्थयोः कष्टत्वात् विशेषेण नोक्तम । सामान्येन तु मज्जश्चतुर्थकोक्त्यैवोक्तम् ॥

**केवलानिलवीसर्पविस्फोटाभिहतज्वरे ॥ १६७ ॥**
**सर्पिष्पानहिमालेपसेकमांसरसाशनम् ।**
**कुर्याद्यथास्वमुक्तञ्च रक्तमोक्षादि साधनम् ॥ १६८ ॥**
**ग्रहोत्थे भूतविध्युक्तं[1] बलिमन्त्रादि साधनम् ।**
**ओषधीगन्धजे पित्तशमनं विषजिद्विषे ॥ १६९ ॥**

सर्वाङ्गसुन्दरी

**केवलानिलेत्यादि** ॥ केवलानिलादिजे ज्वरे सर्पिष्पानादिकं कुर्यात् । यच्च रक्तमोक्षादिसाधनम्, तच्च कुर्यात् । ग्रहोत्थे ज्वरे भूतविद्योक्तं बलिमन्त्रादिसाधनं चिकित्सितम् । ओषधीगन्धजे पित्तशमनं चिकित्सितम् । विषे विषजे ज्वरे विषजिच्चिकित्सितम् ॥

1 भूतविद्योक्तमित्यरुणदत्तस्य पाठः ।

शशिलेखा

केवलानिलादिके ज्वरे सर्पिष्पानादिकं कुर्यात्। यथास्वञ्चाध्यायेषूक्तं विसर्पादिषु रक्तमोक्षादि चिकित्सितम्, तदपि ज्वरे कुर्यात्। सुबोधम् ॥

**इष्टैरर्थैर्मनोज्ञैश्च यथादोषशमेन च।**
**हिताहितविवेकैश्च ज्वरं क्रोधादिजं जयेत्  ॥ १७० ॥**

सर्वाङ्गसुन्दरी

**इष्टैरित्यादि** ॥ क्रोधादिजं ज्वरं इष्टैरभिमतैरर्थैः विषयैस्तथा मनोज्ञैः रम्यैस्तथा यथादोषं यश्शमः शमनं तेन तथा हिताहितविवेकैश्च जयेत्। आदिशब्दोऽत्र भीशोकादिज्वरपरिग्रहार्थः ॥

शशिलेखा

क्रोधकामभयशोकजान् ज्वरानिष्टैः प्रियैर्मनोज्ञै रमणीयैश्चार्थैः विषयैर्जयेत्। पित्तशमनेन क्रोधजं भीशोककामजान् वातशमनेनेत्यर्थः। इद हितं तदात्वानुबन्धयोरिदमहितमिति ज्ञात्वा तदाचरणपरिहाराभ्याञ्च जयेत् ॥

अधुना क्रोधजादीनां पृथगप्युपक्रममाह—

**क्रोधजो याति कामेन शान्तिं क्रोधेन कामजः।**
**भयशोकोद्भवौ ताभ्यां भीशोकाभ्यां तथेतरौ  ॥ १७१ ॥**

सर्वाङ्गसुन्दरी

**क्रोधज इत्यादि** ॥ क्रोधजो ज्वरः कामोपभोगेन शान्तिं याति। कामजश्च ज्वरः क्रोधेन शाम्यति। भयशोकजौ ज्वरौ ताभ्यां कामक्रोधाभ्यां शान्तिं यातः। तथेतरौ कामक्रोधजौ भीशोकाभ्यां शाम्यतः ॥

शशिलेखा

क्रोधजस्तु ज्वरः क्रोधविषये कामोत्पादनेन शमं याति। कामजश्च कामविषये क्रोधोत्पादनेन। भयोद्भवो ज्वरः शोकोद्भवश्च ताभ्यां कामक्रोधाभ्यां शमं यातः। भयविषये क्रोधविषये च दोषाद्यपेक्षया कदाचित् क्रोधः कदाचित् कामः। तथेतरौ कामक्रोधोद्भवौ शोककामाभ्यां शमं यातः। सुबोधम् ॥

शापाथर्वणमन्त्रोत्थे विधिर्दैवव्यपाश्रयः ॥
ते ज्वराः केवलाः पूर्वं व्याप्यन्तेऽनन्तरं मलैः ॥ १७२ ॥
तस्माद्दोषानुसारेण तेष्वाहारादि कल्पयेत् ।

सर्वाङ्गसुन्दरी

**शापेत्यादि** ॥ शापाद्युत्थे ज्वरे दैवव्यपाश्रयो विधिः कार्यः । शापो मुनिपित्रादिभिः सक्रोधैर्दत्तः । ते शापाद्युत्था ज्वराः पूर्वं केवला भवन्ति । अनन्तरं मलैर्वातादिभिः व्याप्यन्ते । तस्माद्धेतोस्तेषु ज्वरेषु दोषानुसारेणाहारादि कल्पयेत् ॥

शशिलेखा

दैवव्यपाश्रयो विधिर्मणिमन्त्रादिः । तेषु चागन्तुज्वरेषु आहारादिकं दोषानुसारेण कल्पयेत् । यतस्ते आगन्तवो ज्वराः आगन्तुसमवधानवेलायां केवलाः सन्तापमात्ररूपा एव भवन्ति । तथाऽप्यनन्तरं मलैर्वातादिभिर्व्याप्यन्ते ॥

ननु शापाद्युत्थेषु वातादिकोपो नाशङ्क्यत एव, तत् किमिति तेष्वाहारादिकं दोषानुसारेण कल्प्यत इत्याह—

न हि ज्वरोऽनुबध्नाति मारुताद्यैर्विना कृतः ॥ १७३ ॥
ज्वरकालस्मृतिश्चास्य हारिभिर्विषयैर्हरेत् ।

सर्वाङ्गसुन्दरी

**नहीत्यादि** ॥ यस्माद्वातादीन्विनाऽन्तरेण कृतो ज्वरो नानुबध्नाति, तस्मादवश्यं तेष्वपि वातादिकोपः संभाव्यते । अत एव च दोषानुसारेणाहारादिकल्पनं युक्तम् । अस्य च ज्वरिणो ज्वरकालस्मृतिं हारिभिर्मनोहरैः विषयैः शब्दादिभिर्हरेत विस्मारयेत् ॥

शशिलेखा

यस्मात् ज्वरो मारुताद्यैर्विनाकृतोऽनुबन्धं न गृह्णाति, अनुबन्धश्चेत् स्थिता एव मारुतादय इति । अस्यातुरस्य ज्वरागमनकालस्मृतिं मनोहरैः शब्ददिभिर्हरेत् ॥

करुणार्द्रं मनः शुद्धं सर्वज्वरविनाशनम् ॥ १७४ ॥

सर्वाङ्गसुन्दरी

शुद्धं रागद्वेषाद्यनुपहतं तथा करुणयार्द्रं कृपापरवशं चेतः सर्वज्वरविनाशनं स्यात् ॥

शशिलेखा

शुद्धं रागादिभिरनुपहतम् । सुबोधम् ॥

त्यजेदाबललाभाच्च व्यायामस्नानमैथुनम् ।
गुर्वसात्म्यं विदाह्यन्नं यच्चान्यज्ज्वरकारणम् ॥ १७५ ॥
न विज्वरोऽपि सहसा सर्वान्नीनो भवेत्तथा ।
निवृत्तोऽपि ज्वरः शीघ्रं व्यापादयति दुर्बलम् ॥ १७६ ॥

सर्वाङ्गसुन्दरी

त्यजेदित्यादि ॥ बललाभादा बललाभमवधीकृत्य व्यायामादि त्यजेत् नाचरेत् । स्नानञ्च यद्यपि दीपनादिगुणयुक्तं प्रागधीतम् , तथाऽपि प्रभावाज्ज्वरं करोतीति तद्वर्जनम् । एवं व्यायामादिष्वपि चिन्त्यम् । अपरमनुक्तमपीह यत् ज्वरकारणम्, तदपि त्यजेत् । खरणादेऽप्येवमधिजगे—"पिष्टान्नं हरितं शाकं मांसं शुष्कं तिलं दधि । ग्राम्यानूपौदकाजाविगव्यसूकरमाहिषम् ॥ मांसं शुष्काणि शाकानि सर्वशो वर्जयेज्ज्वरी" । तथोक्तम्—"ज्वरितैस्तित्तिरिक्रौञ्च-शिखिवर्तककुक्कुटाः । गुरूष्णत्वाद्विवर्ज्याः स्युरत्र सोपद्रवे ज्वरे" । तथा विज्वरोपि पूर्वानुभूतज्वरः सहसा अक्रमेणैव सर्वान्नभक्षो न स्यात् । सर्वान्नीन इति । उपपदसर्वान्नेत्यादिना खः । यतो निवृत्तोऽप्युपरतोऽपि ज्वरः शीघ्रमेव दुर्बलं व्यापादयति ॥

शशिलेखा

तथेति सर्वान्नाहारत्वे । हिशब्दो यस्मादर्थे । यस्माज्ज्वरो निवृत्तो गतः पुनः प्रत्यावृत्तः पूर्वक्षपितत्वाद्दुर्बलं नरं शीघ्रं व्यापादयतीति ॥

सद्यः प्राणहरो यस्मात्तस्मात्तस्य विशेषतः ।
तस्यां तस्यामवस्थायां तत्तत् कुर्यात् भिषग्जितम् ॥ १७७ ॥



सर्वाङ्गसुन्दरी

**सद्य इत्यादि ।।** यस्माच्च ज्वरः सद्य एव प्राणहृद्भवति, तस्मात् कारणात् तस्य ज्वरिणो विशेषेणान्यरोगेभ्यः सकाशात् तस्यां तस्यामामपच्यमानपक्व-जीर्णविषमचिरनिवृत्तज्वराद्यवस्थायां तत्तल्लङ्घनस्वेदनयवागूपाचनक्षीरसर्पिष्पानादिकं भिषग्जितमौषधं कुर्यात् ।।

शशिलेखा

स च निवृत्तो ज्वरः यस्मात् सद्यः प्राणहरस्तस्मात् तस्यावस्थाविशेषं विकल्प्य योग्यमौषधं कुर्यात् ।।

**ओषधयो मणयश्च सुमन्त्राः साधुगुरुद्विजदैवतपूजाः ।**
**प्रीतिकरा मनसो विषयाश्च घ्नन्त्यपि विष्णुकृतं ज्वरमुग्रम् ।।**

सर्वाङ्गसुन्दरी

**ओषधय इत्यादि ।।** ओषध्यादयो विष्णुकृतमप्युग्रं ज्वरं घ्नन्ति । किं पुनरपचारकृतं ज्वरं घ्नन्तीत्यपिशब्दार्थः । भौतुभाभोगिति दोधकमे-तदिति ।।

शशिलेखा

ओषधयो मणयश्च मूर्ध्ना धृता इत्यर्थात् । मन्त्राः सर्वव्याधिचिकित्सि-ताद्या जप्यमानाः । साधवस्सज्जनाः । गुरवः पित्रादयः । द्विजा विप्राः । दैवतानि हरिहरादिदेवाः । आर्यावलोकितार्यतारापर्णशबर्यापराजिताख्यं दैवं वा । तेषां पूजाप्रणामादि । मनसः प्रीतिकराः अभिरामा विषयाः शब्दादयः । मनसो बलाबलेन तदा तदा ज्वरः स्यादित्युक्तमतो मनसः पुष्टये मनोज्ञा विषया इत्ये-ते ज्वरमुग्रं विष्णुकृतमपि घ्नन्ति । किं पुनर्दोषजमागन्तुजञ्च ज्वरम् ।।

**इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायाम्**
**इन्दुविरचितशशिलेखासहितायां चिकित्सितस्थाने**
**प्रथमोऽध्यायः ।।**



# ॥ द्वितीयोऽध्यायः ॥

ज्वरचिकित्सितमनन्तरं रक्तपित्तचिकित्सितमुच्यते। यतो महेश्वरस्य ललाटात् ज्वरो बभूव, तत्सन्तापाद्रक्तपित्तमित्युक्तम्, अतो रक्तपित्तचिकित्सितस्यैवारम्भो युक्तः। तथा निदाने यद्विशेषेण नोक्तं तदिह विशेषेण स्पष्टं कृत्वा निदानप्रायमपि भण्यते, रक्तपित्तस्य क्षिप्रकारित्वात्।

अथातो रक्तपित्तचिकित्सितं नामाध्यायं व्याख्यास्यामः।

इति ह स्माऽहुरात्रेयादयो महर्षयः।

ऊर्ध्वगं बलिनोऽवेगमेकदोषानुगं नवम्।
रक्तपित्तं सुखे काले साधयेन्निरुपद्रवम् ॥ १ ॥
अधोगं यापयेद्रक्तं यच्च दोषद्वयानुगम्।
शान्तं शान्तं पुनः कुप्यन्मार्गान्मार्गान्तरं च यत्[1] ॥ २ ॥
अतिप्रवृत्तं मन्दाग्नेस्त्रिदोषं द्विपथं त्यजेत्।

सर्वाङ्गसुन्दरी

ऊर्ध्वगमित्यादि ॥ बलिनो बलवतः पुंसो न स्त्रियाः यदुत्पन्नमूर्ध्वगं रक्तपित्तं तत साधयेत् उपक्रमेत्। तथा यदवेगं अवेगवत् तथैको दोषः कफाख्यः अनुगो अनुबलो यस्य तदेकदोषानुगम्। निदानेप्युक्तम्—"ऊर्ध्वं साध्यं कफाद्यस्मात्"इत्यादि। तथा नवमचिरोत्पन्नम्, तथा यत्सुखे काले व्याधिप्रतिपक्षभूते हेमन्तशिशिरे वा जातम्, तथा निरुपद्रवं विकृतिविज्ञानीयाध्यायोक्तैः "रक्तपित्तं भृशं रक्तम्"इत्यादिग्रन्थनिर्दिष्टैरुपद्रवै रहितम्। अतो लक्षणाद्यद्विपर्ययलक्षणमूर्ध्वगमपि रक्तपित्तं तदर्थादसाध्यं याप्यं वा स्यादिति गम्यते। अधोगं रक्तपित्तमूर्ध्वगरक्तपित्तोक्तैकदोषानुगादिविशेषणविशिष्टमपि यापयेत्। यच्च दोषद्वयानुगं रक्तं कफवाताभ्यां हीनबलाभ्यामनुगतमूर्ध्वगमपि तच्च यापयेत्। शान्तं शान्तमतिशयेन शान्तं पुनः कुप्यत् कोपं गच्छत् ऊर्ध्वगमेकदोषानुग-

---

1 तस्मादपि चाधोमार्गात् पुनर्मार्गान्तरमूर्ध्वं याति, तदुभयं यापयेदिति चन्द्रिकाव्याख्या।

मधोगं वा त्यजेत्। तथा मार्गादूर्ध्वान्नासास्यकर्णाक्षिलक्षणात् मार्गान्तरं गुदमेढ्रलक्षणं यत् गच्छत् एवं यत् प्रवृत्तं, तच्च त्यजेत्। यदिति। इण: शतरि इणो यणिति यादेशे यदिति रूपम्। तथाऽतिप्रवृत्तमूर्ध्वमार्गादधोमार्गाद्वा यद्रक्तपित्तम्, तत्त्यजेत्, रक्तस्य प्राणायतनत्वात्। उक्तञ्च-"जीवितं प्राणिनां तत्र रक्ते तिष्ठति तिष्ठती"ति। तथा मन्दाग्ने: यत् प्रवृत्तमधोगमूर्ध्वगं वा, तदपि विरुद्धोपक्रमत्वात् त्यजेत्। तथा हि, मन्दाग्ने: कटुकाम्लोष्णरूक्षतीक्ष्णाद्यौषधमग्निसन्धुक्षणं यत्तद्धितं रक्तपित्ते चातो विपरीतप्रायं यत्तत् पथ्यम्। तथा यत् त्रिदोषं ऊर्ध्वगमधोगं वा, तदपि त्यजेद्विषमत्वात्। यतो नैतद्वमनविषयं भवितुमर्हति। नापि विरेचनविषयम्। तथा यत् द्विपथं द्विमार्गप्रवृत्तं युगपद्रक्तपित्तं, तदपि त्यजेत् प्रतिलोमौषधाभावात्। तथा चोक्तम्—"असाध्यमुभयायनम्, अशक्यप्रातिलोम्यत्वात्" इति॥

शशिलेखा

ऊर्ध्वगमित्यादिविशिष्टं रक्तपित्तं साधयेच्चिकित्सेत्। अधोगमित्यादियुक्तञ्च यापयेत्। अतिप्रवृत्तत्वादियुक्तन्तु त्यजेत्। तं न चिकित्सेदित्यर्थ:। सुख: कालो द्विविधोप्यभिमत:। उपद्रवा: विकृतिविज्ञानीये प्रदर्शिता:। यत् व्रजदित्यर्थ:॥

**ज्ञात्वा निदानमयनं मलावनुबलौ बलम्** ॥ ३ ॥
**देशकालाद्यवस्थाश्च रक्तपित्तं प्रयोजयेत्।**
**लङ्घनं बृंहणं वाऽऽदौ शोधनं शमनं तथा** ॥ ४ ॥

सर्वाङ्गसुन्दरी

**ज्ञात्वेत्यादि** ॥ निदानादि ज्ञात्वाऽनन्तरं रक्तपित्त ऊर्ध्वगे अधोगे वा आदौ प्रथमत एव लङ्घनं प्रयोजयेत्। अथवा बृंहणमथवा शोधनमथवा शमनम्। तत्र निदानं तीक्ष्णोष्णकट्वम्लादिसेवनमेतज्ज्ञानं हि यन्निदानं तद्वर्जने उपयुज्यते। तथा च वक्ष्यति—"यत्किञ्चिद्रक्तपित्तस्य निदानं तच्च वर्जयेत्" इति। अयनमूर्ध्वाधोलक्षणं ज्ञात्वा। तथा च वक्ष्यति—"ऊर्ध्वगे तर्पणं योज्यं प्रागि"ति। तथा "रक्ते सपिच्छे सकफे ग्रथिते कण्ठमार्गगे। लिह्यान्माक्षिकसर्पिर्भ्यां क्षारमुत्पलनाळजम्॥ तथा "गुदागमे विशेषेण शोणिते बस्तिरिष्यते" इति। तथा पित्ताख्यस्य मलस्यात्र मूलभूतत्वात् सामर्थ्यान्मलौ वातकफाख्यावनुबलौ ज्ञात्वा चिकित्साविशेषं

प्रयोजयेत्। तथा च वक्ष्यति—"रक्तपित्तं न चेच्छाम्येत्तत्र वातोल्बणे पयः। युञ्ज्याच्छागम्"इत्यादि। तथा बलं ज्ञात्वा। यतो वक्ष्यति—"यथास्वं मन्थपेयादिः प्रयोज्यो रक्षता बलम्" इत्यादि। देशो द्विविधः, शारीरो भूमिदेशश्च। तत्र शारीरो मुखनासाद्यवयवरूपः। ऊर्ध्वगे हि रक्तपित्ते सत्यपि नासाप्रवृत्ते विशेषेणान्यदौषधमास्यदेशप्रवृत्तेऽन्यत्। तथाऽधोगे रक्तपित्ते सत्यपि गुदप्रवृत्ते विशेषेणान्यदौषधमन्यदेशप्रवृत्ते चान्यत्। भूमिदेशश्च त्रिविधो व्याख्यातो जाङ्गलानूपसाधारणभेदेन। तत्र जाङ्गलेऽन्यदौषधमानूपेऽन्यत्। साधारणे चान्यत्। कालो मुहूर्तादिः शीतोष्णवर्षलक्षण आवस्थिकश्च। तथा च शीते काले अन्यादृशमौषधमन्यस्मिन् कालेऽन्यादृशमौषधं रक्तपित्ते। आदिग्रहणेनानलाहारसत्त्वसात्म्यवयःप्रकृतिप्रभृतयो गृह्यन्ते। अवस्थां च ज्ञात्वा, अवस्थावशाद्रक्तपित्तस्य हि विशेषेणान्यदौषधं स्यात्॥

शशिलेखा

साध्ये च रक्तपित्ते निदानादिकं ज्ञात्वा तदानुगुण्येन कदाचिदादावेव लङ्घनं योजयेत्। कदाचिद्बृंहणमिति तथा कदाचिच्छोधनं कदाचिच्छमनम्। अनुबलौ मलौ वातकफाविति। शोधनादेः सामान्योक्तत्वात् सन्तर्पणोत्थमित्यादिना विशेष उच्यत इति च॥

**सन्तर्पणोत्थं बलिनो बहुदोषस्य साधयेत्।**
**ऊर्ध्वभागं विरेकेण वमनेन त्वधोगतम्॥ ५॥**
**शमनैर्बृंहणैश्चान्यल्लङ्घ्यबृंह्यानवेक्ष्य च।**

सर्वाङ्गसुन्दरी

**सन्तर्पणेत्यादि॥** बलिनो बहुदोषस्य नरस्य सन्तर्पणोत्थं रक्तपित्तमूर्ध्वगं विरेकेण साधयेत्। अधोगतन्तु वमनेन। अन्यदपतर्पणोत्थं रक्तपित्तं दुर्बलस्याल्पदोषस्योर्ध्वगं शमनैः, अधोगतमपतर्पणोत्थं बृंहणैः। ननु चेदं चिकित्सितं किं निरपेक्षं प्रयुञ्जीतेत्याह—लङ्घ्यबृंह्यानवेक्ष्य चेति। लङ्घ्यानामुत्पन्नमधोगतमपि शमनैरुपाचरेत्। बृंह्यानामुत्पन्नमूर्ध्वगमपि बृंहणैरुपाचरेदित्यर्थः॥

शशिलेखा

तुशब्दात्सन्तर्पणोत्थत्वादियुक्तमेव अधोगतं वमनेन। अदित्य। न्यपतर्पणोत्थमबलस्याल्पदोषस्य च यद्रक्तपित्तं, तच्छमनैर्बृंहणैश्च साधयेत्। लङ्घ्यबृंह्यान-

वेक्ष्य च रक्तपित्तं साधयेदिति । अनेन चैतदुक्तं भवति—ह्याधिक्रशितादयो बृंह्यत्वेन ये पूर्वमुक्तास्तेषां सन्तर्पणोत्थत्वादियुक्तं शोधनेन तथा साधयेत् यथा बृंह्यत्वाल्लङ्घनं न दोषाय भवति । तथा येऽपि मेह्यादयो लङ्घ्यत्वेन पठितास्तेषामपतर्पणोत्थत्वादियुक्तं तथाविधाभ्यां शमनबृंहणाभ्यां साधयेद्यथाविधाभ्यां लङ्घ्यस्य बाधा न सम्पद्यत इति ॥

ऊर्ध्वे प्रवृत्ते शमनौ रसौ तिक्तकषायकौ ॥ ६ ॥
उपवासश्च निःशुण्ठीषडङ्गोदकपायिनः ।
अधोगे रक्तपित्ते तु बृंहणो मधुरो रसः ॥ ७ ॥
ऊर्ध्वगे तर्पणं योज्यं प्राक् च पेया त्वधोगते ।

सर्वाङ्गसुन्दरी

ऊर्ध्वमित्यादि ॥ ऊर्ध्वं प्रवृत्ते रक्तपित्ते शुण्ठीरहितं षडङ्गोदकं पिबतः पुंसः तिक्तकषायकौ रसौ शमनौ तथोऽपवासः । अधोगे तु रक्तपित्ते बृंहणो मधुरो रसो हितः । ऊर्ध्वगे रक्तपित्ते प्राक् पूर्वं तर्पणं योज्यं तथा सात्म्यत्वात् । एवमधोगे रक्तपित्ते प्राक् पूर्वं पेया योज्या ॥

शशिलेखा

ऊर्ध्वं प्रवृत्त इत्यादिना शमनबृंहणयोर्मार्गविशेषेण विषयप्रदर्शनम् । षडङ्गं घनादिसाधितमुदकं ज्वरे पठितम् । मधुरो रसो नानाविधया भक्ष्यादिकल्पनया । ऊर्ध्वगे यदाऽन्नं प्रयुज्यते तदा प्रथमं तर्पणं लाजसक्तवः । अधोगे तु पेया । प्रयोज्या ॥

अश्नतो बलिनोऽशुद्धं न धार्यं तद्धि रोगकृत् ॥ ८ ॥
धारयेदन्यथा शीघ्रमग्निवच्छीघ्रकारि तत् ।

सर्वाङ्गसुन्दरी

अश्नत इत्यादि ॥ बलिनो नरस्याश्नतो रक्तमशुद्धं दुष्टं न धार्यं न स्तम्भनीयम् । तद्धि धृतं सिरावेधविध्युक्तान् विसर्पविद्रधिप्लीहादीन् रोगान् करोति । अन्यथा कथिताद्विपर्यये सति दुर्बलस्याऽभुञ्जानस्य च शीघ्रं धारयेद्यस्मादग्निवच्छीघ्रं मरणकारी तद्रक्तमस्तम्भितं स्यात् ॥

शशिलेखा

अशुद्धं रक्तमश्नतो बलिनश्च प्रवृत्तं नैव धार्यम्। स्तम्भनादिना तद्विधारितं रोगकृद्भवति। अन्यथा पुनर्यत् भोजनरहितस्याऽबलस्य च प्रवृत्तं शुद्धं च तच्छीघ्रं धारयेत्। यतस्तद्रक्तपित्तमग्निवच्छीघ्रकारि रक्तक्षयाच्छीघ्रं मारयतीत्यर्थः॥

त्रिवृच्छ्यामाकषायेण कल्केन च सशर्करम् ॥ ९ ॥
साधयेद्विधिवल्लेहं लिह्यात्पाणितलं ततः।
त्रिवृता[1] त्रिफला श्यामा पिप्पली शर्करा मधु ॥ १० ॥
मोदकः सन्निपातोर्ध्वरक्तशोफज्वरापहः।
त्रिवृत्समसिता तद्वत् पिप्पलीपादसंयुता ॥ ११ ॥

सर्वाङ्गसुन्दरी

**त्रिवृच्छ्यामेत्यादि॥** त्रिवृच्छुक्लभाण्डीत्युच्यते। श्यामा माळविका त्रिवृदुच्यते। तयोः कषायेण तथा तयोरेव कल्केन विधिवद्यथाविधि सशर्करं लेहं साधयेत्। ततो लेहात् पाणितलं कर्षं लिह्यात्। मध्यमां मात्रामाश्रित्यैतदुक्तम्। अत्र च कण्टकारिकालेहवत् क्वाथकल्कशर्कराणां प्रमाणं वेद्यमिति वृद्धवैद्यव्यवहारः। तथा त्रिवृतादिभिर्मोदको वटकः शर्करापरिमाणं चात्र क्षयकासचिकित्सितोक्तपञ्चकाद्यचूर्णवत् बोध्यम्। स च मोदकः सन्निपातोर्ध्वरक्तशोफज्वरहृत् भवति। पूर्वोक्तस्य लेहस्य विषयानिर्देशादेष एव विषयो वेद्यः। त्रिवृत्समसिता पिप्पलीपादसंयुता तद्वत्सन्निपातादिहृदित्यर्थः॥

शशिलेखा

त्रिवृतः श्यामायाश्च क्वाथं शर्कराश्च विपाच्य तत्रैव च लेहत्वापादनयोग्यं त्रिवृच्छ्यामाकल्कं दत्वा लेहं साधयेत्। ततो लेहात् पाणितलं कर्षं लिह्यात्। त्रिफलादिभिः समैः शर्करया पित्तजयायाधिकया माक्षिकेण कृतो मोदकः सन्निपातमूर्ध्वप्रवृत्तं रक्तं शोफं ज्वरञ्चापहन्ति। त्रिवृतश्चतुर्थेन भागेन पिप्पली। तद्वदिति मोदकः सन्निपातादिहरः। माक्षिकमत्रानुक्तमपि तद्वत् ग्रहणेन मोदकत्वाल्लभ्यते। इति विरेचनानि रक्तपित्ते॥

---

1 "त्रिफलात्रिवृताश्यामेत्यादि" पाठः इन्दुनाऽङ्गीकृतः।

एवमूर्ध्वगरक्तपित्तचिकित्सामुक्त्वाऽधोगरक्तपित्तचिकित्सितमाह—

वमनं फलसंयुक्तं तर्पणंससितामधु ।
ससितं वा जलं क्षौद्रयुक्तं वा मधुकोदकम् ॥ १२ ॥
क्षीरं वा रसमिक्षोर्वा ...... ......

सर्वाङ्गसुन्दरी

वमनमित्यादि ॥ मदनफलेन संयुक्तं तर्पणं सितामधुभ्यां सह वमनं देयं वातकोपभयादित्यभिप्राय: । अथवा सशर्करं जलं मदनफलसंयुक्तमथवा क्षौद्रयुक्तं मधुकोदकमथवा क्षीरमथवेऽक्षो रसं सर्वमेतन्मदनफलयुक्तं पृथक् प्रत्येकं देयम् ॥

शशिलेखा

फलसंयुक्तं तर्पणादिकमधोगते रक्तपित्ते वमनं भवति । तर्पणं लाजसक्तवो मदनफलसितामधुयुक्तम् । ससितं वा जलमिति वाशब्दात् फलसंयुक्तमेव । क्षीरेक्षुरसयोरनुक्तान्यपि फलानि वमनत्वात् प्राधान्याच्च लभ्यन्ते ॥

.................शुद्धस्यानन्तरो विधि: ।
यथास्वं मन्थपेयादि: प्रयोज्यो रक्षता बलम् ॥ १३ ॥

सर्वाङ्गसुन्दरी

शुद्धस्येत्यादि ॥ ऊर्ध्वगरक्तपित्तिनोऽधोगरक्तपित्तिनो वा यथाक्रमं विरेकवमनाभ्यां शुद्धस्य यथास्वमनन्तरो विधिर्मन्थपेयादि: बलं रक्षता भिषजा प्रयोक्तव्य: । ऊर्ध्वगे मन्थादिरधोगे पेयादिरिति स्वशब्दार्थ: ॥

शशिलेखा

एवं विरेकेण वमनेन वा शुद्धस्य यथास्वं विषयेष्वनन्तरो वक्ष्यमाणो विधि: क्वचिन्मन्थादि: प्रयोज्य: । क्वचित् पेयादि: । तथा च प्रयोज्यो यथा बलहानिर्न भवतीति ॥

मन्थो ज्वरोक्तो द्राक्षादि: पित्तघ्नैर्वा फलै कृत: ।
मधुखर्जूरमृद्वीकापरूषकसिताम्भसा ॥ १४ ॥



मन्थो वा पञ्चसारेण सघृतैर्लाजसक्तुभिः ।
डाडिमामलकाम्लो वा मन्दाग्न्यम्लाभिलाषिणाम् ॥ १५ ॥

सर्वाङ्गसुन्दरी

मन्थ इत्यादि ॥ मन्थो ज्वरोक्तो द्राक्षादिर्द्राक्षामधूकमधुकेत्यादिः पित्तघ्नैर्वा द्राक्षादिभिः फलैः कृतः प्रयोक्तव्यः । अथवा मध्वादिना द्रव्यपञ्चकेन पञ्चसाराख्येन लाजसक्तुभिः ससर्पिष्कैः मन्थो हितः । मन्दाग्नीनामम्लाभिलाषिणां च डाडिमामलकाभ्यामम्लैश्च मन्थः प्रयोज्यः ॥

शशिलेखा

ज्वरोक्तो द्राक्षादिर्मन्थः "द्राक्षाडाडिमकाश्मर्यपथ्याविल्वपरूषकैः । समधूकैस्सबदरैः सक्षौद्रैः ससितोपलैः ॥ ज्वरघ्नैस्तोयमृदितै"रिति संग्रहोक्तः । अन्यैर्वा पित्तघ्नैः फलैः कृतः । अथवा पञ्चसाराख्येनाम्भसा करणभूतेन घृताभ्यक्तैर्लाजसक्तुभिः कृतो मन्थः । अन्यैः पञ्चसारशब्देन क्षतक्षयकासचिकित्सिते संग्रहे पठितं "शर्करापिप्पलीचूर्णैः सर्पिषा माक्षिकेण च । संयुक्तं वा शृतं क्षीरमि"ति क्षीरं व्याख्यातम् । तत्र त एव पण्डिताः प्रमाणम् । मन्दाग्नेरम्लाभिलाषिणश्च रक्तपित्तवतो डाडिमेनामलकैश्चापादिताम्लत्वो मन्थः । पित्तश्लेष्माधिक्यादिना पेयायोग्यस्यैते मन्थाः । तत्र च ज्वरोक्तं स्मरणीयमिति ॥

अधोगे रक्तपित्ते प्राक् पेया प्रयोज्येत्युक्तमतस्ता एव पेया ब्रूते—

[1]कमलोत्पलकिञ्जल्कपृश्निपर्णीप्रियङ्गुकाः ।
उशीरं शाबरं लोध्रं शृङ्गिवेरं कुचन्दनम् ॥ १६ ॥

ह्रीवेरं धातकीपुष्पं विल्वमध्यं दुरालभा ।
इत्यर्धचोदिता पेया वक्ष्यन्ते पादयौगिकाः ॥ १७ ॥

भूनिम्बसेव्यजलदाः मसूराः पृश्निपर्ण्यपि ।
विदारगन्धा मुद्गाश्च बला सर्पिर्हरेणुका ॥ १८ ॥

---

1 ശാബരകലോധ്രം=വെട്ടി; പൃശ്നിപർണ്ണി=ഓരില; കുചന്ദനം=രക്തചന്ദനം; വിദാരഗന്ധാ=ഓരില.

जाङ्गलानि च मांसानि शीतवीर्याणि साधयेत् ।
पृथक् पृथक् जले तेषां यवागूः कल्पयेद्रसे ॥ १९ ॥
शीताः सशर्कराक्षौद्रास्तद्वन्मांसरसानपि ।
ईषदम्लाननम्लान्वा घृतभृष्टान् सशर्करान् ॥ २० ॥

सर्वाङ्गसुन्दरी

कमलोत्पलेत्यादि ॥ कमलोत्पलैरित्यादिभिरर्धार्धैः श्लोकैः पेया विहिताः। पादयौगिकाः वक्ष्यन्ते भूनिम्बसेव्येत्यादयः ।

मांसानि जाङ्गलानि शीतवीर्याणि शशादिसंबन्धीनि पूर्वोक्तपेयौषधानां पृथक् पृथक् जले साधयेत्। अनन्तरं तस्मिन् रसे यवागूरपि कल्पयेत्। कीदृशाः—शीतास्तथा सशर्कराक्षौद्राः । तद्वन्मांसरसानपि कल्पयेत् । तद्वदित्यनेन शीतत्वं मांसरसानामतिदिशति । न तु शर्कराक्षौद्रत्वमप्ययोगार्हत्वात् । अत एवाह —तान्मांसरसानीषदम्लानम्लाभिलाषिणः । अनम्लाभिलाषिणोऽनम्लानेव । तथा घृतभृष्टान् सशर्करान् शर्करायुक्तान् ॥

शशिलेखा

यत्र तु योग्याः पेयास्तत्र यथाविषयं कमलाद्युशीरादिह्रीबेरादिभिस्त्रिभिरर्धश्लोकैराचार्यैर्विहिताः पेयाः रक्तपित्ते । भूनिम्बेत्यादिना श्लोकचतुर्भागैश्चतस्रः पेया वक्ष्यन्ते । विदारगन्धा शालिपर्णी । एषाञ्चानन्तरोक्तानां पेयौषधानां शीतवीर्याणां जाङ्गलमांसानाञ्च रसे क्वाथे पृथक् पृथक् यवागूः कल्पयेत् । अनेन चैतदुक्तम्—दोषाद्यपेक्षया कदाचित् पेया हिताः केवलाः, कदाचिन्मांसपेयाः, कदाचिन्मांसरसाः । ते च पेयादयः औषधक्वाथसिद्धाः कदाचित् डाडिमामलका दिनाऽम्लाः, सर्वे च घृतादियुक्ताः ॥

शूकशिम्बीभवं धान्यं रक्ते शाकं च शस्यते ।
अन्नस्वरूपविज्ञाने यदुक्तं लघु शीतलम् ॥ २१ ॥
पूर्वोक्तमम्बु पानीयं पञ्चमूलेन वा शृतम् ।
लघुना शृतशीतं वा मध्वम्भो वा फलाम्बु वा ॥ २२ ॥

सर्वाङ्गसुन्दरी

**शूकेत्यादि** ॥ तथ. शूकशिम्बीजं धान्यं शाकं च रक्तपित्ते शस्यते। अन्नस्वरूपविज्ञानीये यदुक्तं लघु च शीतलञ्च। तथा पूर्वोक्तमम्बु षडङ्गं शुण्ठीरहितं पानीयं पातव्यम्। अथवा लघुना पञ्चमूलेन शृतम्। पानीयस्य श्रपणे तन्त्रकारैर्विधिरुक्तः। यथा—"कर्षं गृहीत्वा द्रव्यस्य क्वाथयेत् प्रास्थिकेऽम्भसि। अर्धं शृतं प्रयोक्तव्यं तोयपाके त्वयं विधिः" इति। केवलं वा जलं शृतं शीतं मध्वम्भो वा माक्षिकयुक्तं जलं वा पानीयम्। फलाम्बु वा द्राक्षादिभिर्वातपित्तघ्नैः फलैः कृतम् ॥

शशिलेखा

अन्नस्वरूपविज्ञानेऽध्याये शूकधान्यादिकं यल्लघु शीतलञ्चोक्तं, तद्रक्ते शस्यते। न तु यवकादिमाषादिकाकमाच्यादि। पूर्वोक्तमम्बु निश्शुण्ठीषडङ्गमथवा लघुना ह्रस्वेन पञ्चमूलेन सिद्धं ततः शीतं वा केवलं जलम्। फलाम्बु द्राक्षाखर्जूरादिमृदितपूर्वकम् ॥

**शशः सवास्तुकः शस्तो विबन्धे तित्तिरिः पुनः।**
**उदुम्बरस्य निर्यूहे साधितो मारुतेऽधिके ॥ २३ ॥**

**प्लक्षस्य बर्हिणस्तद्वत् न्यग्रोधस्य च कुक्कुटः।**
**यत्किञ्चिद्रक्तपित्तस्य निदानं तच्च वर्जयेत् ॥ २४ ॥**

सर्वाङ्गसुन्दरी

**शश इत्यादि** ॥ शशः शशस्य मांसं सह वास्तुकेन विबन्धे सति रक्तपित्तिनां शस्तम्। तित्तिरिस्तु मारुतेऽधिके उदुम्बरस्य क्वाथे साधितः शस्तः। प्लक्षस्य क्वाथे साधितो बर्हिणो मयूरस्तद्वन्मारुतेऽधिके शस्तः। बर्हिण इति फलबर्हाभ्यामिनच्। तथैव न्यग्रोधस्य निर्यूहे साधितः कुक्कुटः शस्तः। उदुम्बरादिक्वाथसाधनं तित्तिर्यादीनामौष्ण्यं प्रतिहन्तुम्। यत्किञ्चिद्रक्तपित्तस्य कारणं येन सेवितेन तज्जातं तच्च वर्जयेत् परिहरेत् ॥

शशिलेखा

शश इत्यादि सुबोधम्। पुनश्शब्दात्तित्तिरिरपि सवास्तुकः। मारुतेऽधिके रक्तपित्ते उदुम्बरक्वाथसाधितस्तित्तिरिः। कचिन्मारुतेऽधिके प्लक्षस्य

निर्यूहे बर्हिणो मयूर: । फलबर्हाभ्यामिनङ् मत्वर्थीय: । सर्वा षष्ठी निर्यूहापेक्षया । भृशोष्णतीक्ष्णादि सर्वं रक्तपित्तकारणं रक्तपित्ती वर्जयेत् ॥

वाशारसेन फलिनीमृल्लोध्राञ्जनमाक्षिकम् ।
पित्तासृक् शमयेत् पीतं निर्यासो वाऽऽटरूषकात् ॥ २५ ॥
शर्करामधुसंयुक्त: केवलो वा शृतोऽपि वा ।
वृष: सद्यो जयत्यस्रं स ह्यस्य परमौषधम् ॥ २६ ॥

### सर्वाङ्गसुन्दरी

वाशेति ॥ वाशकस्य रसेन फलिन्यादिकं पीतं पित्तासृक् रक्तपित्तं जयेत् । अथवाऽऽटरूषस्य रस: शर्करामधुसंयुक्त: पीत: रक्तपित्तं जयेत् । अथवा केवलो वाशारस: । अथवा क्वथितो वृष: शीघ्रं रक्तपित्तं जयेत् । स वृषो यस्मादस्य रक्तस्य परमौषधम् ॥

### शशिलेखा

फलिन्यादि वाशास्वरसेन पीतं पित्तासृक्शमनम् । अथवा केवल एवाटरूषकाद्वाशाया निर्यास: स्वरस: । अथवा न केवलोऽपि तु शर्करामधुसंयुक्त: स वाशानिर्यास: । अथवा शृत: क्वथित: । वृष: सद्यो जयत्यस्रम् । हिशब्दो यस्मादर्थे । यस्मात् सर्वप्रकारोऽपि वृषोऽस्य रक्तस्य परं प्रधानमौषधम् ॥

पटोलमालतीनिम्बचन्दनद्वयपद्मकम् ।
लोध्रो वृषस्तण्डुलीय: कृष्णा मृग्मदयन्तिका[1] ॥ २७ ॥
शतावरी गोपकन्या काकोल्यौ मधुयष्टिका ।
रक्तपित्तहरा: क्वाथास्त्रय: समधुशर्करा: ॥ २८ ॥
पलाशवल्कक्वाथो वा सुशीत: शर्करान्वित: ।
पिबेद्वा मधुसर्पिर्भ्यां गवाश्वशकृतो रसम् ॥ २९ ॥
सक्षौद्रं ग्रथिते रक्ते लिह्यात्पारावतं शकृत् ।

### सर्वाङ्गसुन्दरी

पटोलेत्यादि ॥ पटोलादयोऽर्धश्लोकैस्त्रय: क्वाथा: मधुशर्करायुता

1 कृष्णमृदिति वा पाठ: । മദയന്തികാം=താതിരിപ്പൂവ്.

रक्तपित्तं जयन्तीति योज्यम्। अत्र च वाशक आर्द्रोऽपि द्विगुणो न योज्यः। एवं ह्युक्तं तन्त्रान्तरे—"वाशाकुटजकूष्माण्डशतमूलीसहाचराः। नित्यमार्द्राः प्रयोक्तव्यास्तथापि द्विगुणा न ते" इति। अथवा पलाशत्वक्काथः सुशीतः शर्करायुतः पूर्वोक्तगुणः। अथवा मधुसर्पिर्भ्यां गवाश्वाश्वानाच्च शकृतो रसं पिबेत्। गवाश्वेत्यवङ्स्फोटायनस्येत्यवङादेशः॥

शशिलेखा

ग्रथिते ग्रथितवति रक्तपित्ते पारावतस्य शकृत् क्षौद्रेण सह लिह्यात्। पटोलादिभिस्त्रिभिः श्लोकार्धैस्त्रयः प्रयोगाः। सुबोधम्। गवाश्वस्य शकृद्रसः घृतमाक्षिकाभ्यां लेहप्रयोगः। सुबोधम्।

[1]अतिनिस्स्रुतरक्तश्च क्षौद्रेण रुधिरं पिबेत् ॥ ३० ॥
जाङ्गलं भक्षयेद्वाजमामं पित्तयुतं यकृत्।

सर्वाङ्गसुन्दरी

अतिनिस्स्रुतरक्तश्च जाङ्गलं रक्तं क्षौद्रेण सह पिबेत्। आजं यकृदपक्वं पित्तयुतं भक्षयेत्॥

शशिलेखा

स्रुतमेव निस्स्रुतम्। जाङ्गलजीवप्रभवत्वाद्रुधिरं जाङ्गलम्। अथवा आजं यकृदपक्वं सजातीयपित्तसंयुक्तं भक्षयेत्॥

चन्दनोशीरजलदलाजमुद्गकणायवैः ॥ ३१ ॥
बलाजले पर्युषितैः कषायो रक्तपित्तहा।
प्रसादश्चन्दनाम्भोजसेव्यमृद्भृष्टलोष्टजः ॥ ३२ ॥
सुशीतः ससिताक्षौद्रः शोणितातिप्रवृत्तिजित्।

सर्वाङ्गसुन्दरी

चन्दनेत्यादि॥ चन्दनादिभिर्बलाजले पर्युषितैः कषायो रक्तपित्तजित् रक्तपित्तं नियच्छति। चन्दनादिजः प्रसादः चन्दनादीनां विचूर्ण्य जलेनालोड्य

1 "निस्रुत" इति पाठः सङ्ग्रहे।

स्थापितानामुपरिभवो भागः सुशीतः शर्करामाक्षिकाभ्यां सहितः रक्तस्यातिप्रवृत्तिं जयेत् ॥

शशिलेखा

बलायाः काथस्य षट्सु पलेषु चन्दनादीनां पलं रात्रिस्थितं द्वितीयेऽह्नि प्रातः पीतः कषायः रक्तपित्तघ्नः । चन्दनाम्भोजादीनां प्रसादो विचूर्ण्य जलेनालोड्य स्थापितानामुपरिभवो भागः सितादिमान् शोणितस्यातिप्रवृत्तिजित् ॥

**आपोथ्य वा नवे कुम्भे प्लावयेदिक्षुगण्डिकाः ॥ ३३ ॥**
**स्थितं तद्गुप्तमाकाशे रात्रिं प्रातः स्रुतं जलम् ।**
**मधुमद्विकचाम्भोजकृतोत्तंसं च तद्गुणम् ॥ ३४ ॥**
**ये च पित्तज्वरप्रोक्ताः कषयास्तांश्च योजयेत् ।**

सर्वाङ्गसुन्दरी

**आपोथ्य वेति ॥** इक्षुगण्डिकाः आपोथ्य दृषद्भिः संक्षुद्य जले प्लावयेत् । नवे कुम्भे रात्रिमाकाशे गुप्तं कीटाद्युपहतं यथा न स्यात्तथा स्थितं तदिक्षुगण्डिकाजलं प्रातः स्रुतं समाक्षिकं विकसितपद्मेन कृतशेखरं तद्गुणं पूर्वगुणमित्यर्थः । पित्तज्वरे च ये कषाया उक्ताः "शक्रयवा घनं कटुका चेति सक्षौद्राः" इत्यादयस्तांश्च कषायानत्र योजयेत् ॥

शशिलेखा

अथवा इक्षुगण्डिका आपोथ्य जर्जरीकृत्य प्लावयेत् बहुना जलेनाभिषुणुयात् । तज्जलमाकाशे लम्बशिक्ये रात्रिं सुरक्षितं स्थितं प्रातर्वस्त्रादिना स्रुतं समकरन्दं विकसितजलजकुसुमकृतोत्तंसं सत् तद्गुणं शोणितं जयतीत्यर्थः । उत्तंसं शेखरम् । सुबोधम् ॥

**कषायैर्विविधैरेभिर्दीप्तेऽग्नौ विजिते कफे ॥ ३५ ॥**
**रक्तपित्तं न चेच्छाम्येत्तत्र वातोल्बणे पयः ।**
**युञ्ज्याच्छागं शृतं तद्वद्गव्यं पञ्चगुणेऽम्भसि ॥ ३६ ॥**
**पञ्चमूलेन लघुना शृतं वा ससितामधु ।**

जीवकर्षभकद्राक्षाबलागोक्षुरनागरैः ॥ ३७ ॥
पृथक् पृथक् शृतं क्षीरं सघृतं सितयाऽथवा ।

सर्वाङ्गसुन्दरी

**कषायैरिति ॥** एभिर्विविधैर्नानाप्रकारैः कषायैरग्नौ दीप्ते कफे च विजिते सति यदि रक्तपित्तं न शाम्यति, तत्र वातोल्बणे रक्तपित्ते पञ्चगुणेऽम्भसि शृतं छाग पयो युञ्ज्यात् । पञ्चगुणेऽम्भसि गव्यं क्षीरं क्वथितं तद्वत्तेन छागेन समानगुणम् । अथवा लघुना पञ्चमूलेन शृतं गव्यं सशर्करामधु तद्गुणम् । तथा जीवकादिभिः पृथक् शृतं सह घृतेनाथवा शर्करया सह तद्गुणम् ॥

शशिलेखा

कषायैर्विविधैरित्यादिना क्षीरविषयो दर्शितः । तद्वदिति गव्यं पयः शृतमेतल्लघुपञ्चमूलशृतमेव ससितामधु । पृथक् पृथगिति कदाचिज्जीवकेन कदाचिदृषभकेणेत्येवं सर्वैः । अथवा शर्करया शृतं सर्वथा सघृतम् ॥

गोकण्टकाभीरुशृतं पर्णिनीभिस्तथा पयः ॥ ३८ ॥
हन्त्याशु रक्तं सरुजं विशेषान्मूत्रमार्गगम् ।
विण्मार्गगे विशेषेण हितं मोचरसेन तु ॥ ३९ ॥
वटप्ररोहैः शुङ्गैर्वा शुण्ठ्युदीच्योत्पलैरपि ।
रक्तातिसारदुर्नामचिकित्साश्चात्र कल्पयेत् ॥ ४० ॥
पीत्वा कषायान् पयसा भुञ्जीत पयसैव च ।
कषाययोगैरेभिर्वा विपक्वं पाययेद् घृतम् ॥ ४१ ॥

सर्वाङ्गसुन्दरी

**गोकण्टकेत्यादि ॥** गोकण्टकाभीरुभ्यां तथा सालपर्णी,पृश्निपर्णी,मुद्गपर्णी, माषपर्णीभिः शृतं शीघ्रमेव रक्तं सवेदनं हन्ति । विशेषेण मूत्रमार्गगतम् । विशेषग्रहणात् अन्यमार्गगमपि रक्तं हन्तीति द्योतयति । रक्तशब्दस्यातिसार-दुर्नाम्नोः सम्बन्धः । रक्तातिसारस्य रक्तार्शसश्च या चिकित्सा ताञ्चात्र रक्ते योजयेत् । कषायान् पूर्वोक्तान् पयसा पीत्वा पयसैवाश्नीयात् । एतैर्वा कषायाख्यैर्योगैर्विपक्वं घृतं रक्तपित्तिनं पाययेत् ॥

शशिलेखा

अत्र च रक्तपित्ते दोषाद्यपेक्षया रक्तातीसारचिकित्सां रक्तार्शश्चिकित्सां च कल्पयेत् । कषायांश्चूर्णादीन् पयसा पीत्वा पयसैव भुञ्जीत । यथादोषादि च पूर्वोक्तैर्नानाविधकल्पनोपयोगैरौषधैर्विपक्वं घृतं पाययेत् ॥

समूलमस्तकं क्षुण्णं वृषमष्टगुणेऽम्भसि ।
पक्त्वाऽष्टांशावशेषेण घृतं तेन विपाचयेत् ॥ ४२ ॥
तत्पुष्पगर्भं तच्छीतं सक्षौद्रं पित्तशोणितम् ।
पित्तगुल्मज्वरश्वासकासहृद्रोगकामिलाः ॥ ४३ ॥
तिमिरभ्रमवीसर्पस्वरसादांश्च नाशयेत् ।
पलाशवृन्तस्वरसे तद्गर्भं च घृतं पचेत् ॥ ४४ ॥
सक्षौद्रं तच्च रक्तघ्नं तथैव त्रायमाणया ।

सर्वाङ्गसुन्दरी

समूलेत्यादि ॥ मूलपल्लवादियुतं क्षुण्णं जर्जरितं वृषमष्टगुणे जले पक्त्वा तेनाष्टांशावशेषेण क्वाथेन घृतं विपाचयेत् । किंभूतम्—तत्पुष्पगर्भं तस्य वृषस्य पुष्पाणि गर्भः कल्को यस्य तदेवम् । तच्च शीतीभूतं क्षौद्रेण सहितं पित्तशोणितादीन्नाशयेत् । पलाशस्य वृन्तानां स्वरसे तद्गर्भं पलाशवृन्तकल्कं घृतं पचेत । तच्च क्षौद्रेण सह रक्तघ्नं भवति । तद्वदेव त्रायमाणया शृतं रक्तपित्तघ्नम् ॥

शशिलेखा

समूलशाखस्यार्द्रवृक्षस्योलूखले क्षुण्णस्य षोडशपलान्यष्टाविंशाधिकेन शतेन जलपलानां पक्त्वा पक्वस्य षोडशपलानि गृहीत्वा तेन तावदेव घृतं घृताच्चतुर्थांशेन शौनकमतेन षष्ठांशेन वा वृषपुष्पाणि गर्भे दत्वा विपचेत् । सुबोधम् । पलाशवृन्तानां स्वरसः सामान्यपरिभाषया घृताच्चतुर्गुणस्तेषामेव गर्भचूर्णस्य घृताच्चतुर्थांशत्वम् । शौनकमतेऽष्टमांशत्वं कल्कस्य । अनेनैव विधिना त्रायमाणा-साधितं घृतम् । वृन्तं पत्रम् ॥

रक्ते सपिच्छे सकफे ग्रथिते कण्ठमार्गगे ॥ ४५ ॥
लिह्यान्माक्षिकसर्पिर्भ्यां क्षारमुत्पलनालजम् ।
पृथक् पृथक् तथाम्भोजरेणुश्यामामधूकजम् ॥ ४६ ॥
गुदागमे विशेषेण शोणिते बस्तिरिष्यते ।

सर्वाङ्गसुन्दरी

**रक्त इत्यादि ॥** रक्ते पिच्छावति। पिच्छा शाल्मल्या रससदृशी। तथा सकफे तथा ग्रथिते ग्रन्थिसदृशे तथा कण्ठमार्गगे सति क्षारमुत्पलनालजं माक्षिकसर्पिर्भ्यां लिह्यात्। ननु क्षारस्य तीक्ष्णादिगुणयोगाद्रक्तपित्ते न युक्त उपयोगः। तत् कथमिह तमनुमेने तन्त्रकृत्। ब्रूमः—उत्पलादीनि शीतस्वभावानि तत्समुत्थश्च क्षारः स्वयोनिमनुकरोति। तथा चोक्तम्—"कारणानुविधायित्वात् कार्याणां तत्सभागता" इति। क्षारस्वरूपञ्च विष्यन्दनात्मकं धत्ते। तदेवं कण्ठमार्गगतस्य कफानुबन्धस्य ग्रथितस्य रक्तस्य क्षारो घृतमाक्षिकाभ्यां संयुक्तो विष्यन्दनपूर्वं शोधयत्येव, न तु तस्य कोपाय स्यादिति युक्तोऽत्र क्षारोपयोगः। अम्भोजरेण्वादिजं पृथक् पृथक् तथा माक्षिकघृताभ्यां लिह्यात्। गुदागमे रक्ते विशेषेण वस्तिरिष्यते ॥

शशिलेखा

कण्ठमार्गगे रक्ते पिच्छात्वादियुते नीलोत्पलनालजः क्षारो मधुसर्पिर्भ्यां लेह्यः। पिच्छा मण्डप्रायम्। ग्रथितं संहतम्। अम्भोजरेण्वादीनामन्यतमस्य क्षारो दोषाद्यपेक्षया प्रयुक्तस्तथा मधुसर्पिर्भ्यां लीढ उत्पलनाळजवद्विज्ञेयः। अम्भोजरेणुरम्भोजकिञ्जल्कः। श्यामा शारिबा। मधूकं मधूककुसुमम्। सुबोधम् ॥

**घ्राणगे रुधिरे शुद्धे नावनं चानुषेचयेत्। ॥ ४७ ॥**
**कषाययोगान् पूर्वोक्तान् क्षीरेक्ष्वादिरसाप्लुतान्**
**क्षीरादीन् ससितांस्तोयं केवलं वा जलं हिमम् ॥ ४८ ॥**
**रसो डाडिमपुष्पाणामाम्रास्थ्नः शाड्वलस्य वा।**

सर्वाङ्गसुन्दरी

**घ्राणग इति ॥** घ्राणगे रक्ते शुद्धे सति नावनमनुषेचयेन्नस्यं दद्यात्। कषाययोगान् पूर्वोक्तान् वाशारसादीन्। किंभूतान्—क्षीरेक्ष्वादिरसाप्लुतान् सद्रवान्। आदिशब्देन मांसरसघृतादि गृह्यते। क्षीरादीन् वा ससितान् सशर्करान् दद्यात्। तथा तोयमर्थात् ससितम्। केवलं वा हिमं जलमिति वक्ष्यति। तथा डाडिमपुष्पाणां रसस्तथाम्रफलास्थ्नः तथा दूर्वाया रसो नस्यं पृथक् पृथक् हितम् ॥

शशिलेखा

घ्राणप्रवृत्ते शुद्धे रक्ते नस्यमनुषेचयेत् । किमित्याह — पूर्वोक्तांश्चूर्णादिकषाययोगान् क्षीरेक्ष्वाद्यन्यतमरसेनालोडितान् । अथवा क्षीरेक्षुरसादीन् सशर्करांस्तोयं वा सशर्करं केवलमेव वा तोयम् । सुबोधम् ॥

कल्पयेच्छीतवर्गञ्च प्रदेहाभ्यञ्जनादिषु ॥ ४९ ॥
यच्च पित्तज्वरे प्रोक्तं बहिरन्तश्च भेषजम् ।
रक्तपित्ते हितं तच्च क्षतक्षीणहितञ्च यत् ॥ ५० ॥

सर्वाङ्गसुन्दरी

कल्पयेदिति ॥ शीतवीर्यवर्गञ्च प्रलेपाभ्यञ्जनादिषु कल्पयेत् । यच्च पित्तज्वरेऽभिहितमौषधं बहिरन्तरे तच्च रक्तपित्ते हितम्, तथा यच्च क्षते क्षीणे च हितं, तदपि रक्तपित्ते हितम् ॥

शशिलेखा

शीतो वर्गः पित्तशमनो दूर्वादिः शोधनादिगणे पठितः । अथवा सङ्ग्रहे महाकषायसङ्ग्रहपठितः पद्मकलाजादिर्दाहहा दशकः । सुबोधश्श्लोकः ॥

इति शशिलेखासहितायां सर्वाङ्गसुन्दर्याख्यव्याख्यायाम्
चिकित्सिते द्वितीयोऽध्यायः ॥

# तृतीयोऽध्यायः

रक्तपित्तचिकित्सानन्तरं कासचिकित्सारम्भः। तस्य च सम्बन्धो निदाने स्वयं ग्रन्थकृतैवोक्तः॥

अथाऽतः कासचिकित्सितं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः॥

केवलानिलजं कासं स्नेहैरादावुपाचरेत्।
वातघ्नसिद्धैः स्निग्धैश्च पेयायूषरसादिभिः ॥ १ ॥

लेहैर्धूमैस्तथाऽभ्यङ्गस्वेदसेकावगाहनैः।
वस्तिभिर्बद्धविड्वातं सपित्तं त्वौर्ध्वभक्तिकैः ॥ २ ॥

घृतैः क्षीरैश्च, सकफं जयेत् स्नेहविरेचनैः।

सर्वाङ्गसुन्दरी

**केवलेत्यादि॥** केवलानिलजो यः कासो दोषान्तरासंसृष्टस्तं स्नेहैर्वातघ्नसिद्धैरादावुपाचरेत्। ननु शुद्धस्य वातस्य स्नेहैरेव प्रधानोपक्रम आदिमध्यावसानेषु, न त्वन्य उपक्रमः, तस्मादादावित्यनेन नार्थः। अत्रोच्यते--केवलो वातो दोषान्तरावृतमार्गः कासस्य कारणम्, नत्वनावृतमार्गः। तथाच काससंप्राप्तावुक्तम्—"तत्राधोविहतोऽनिलः ऊर्ध्वं प्रवृत्त"इत्यादि। एवं वा तस्याधोविहतौ यो दोषः कारणं कफादिस्तस्य रूक्षाद्युपक्रमेणोपशमं कृत्वानन्तरं कासे स्नेहोपक्रमं कुर्युरिति येषाम्, तेषां भ्रान्तिनिरासार्थमादावित्युक्तम्। तथा स्निग्धैश्च पेयादिभिरुपाचरेत्, तथा बद्धौ विड्वातौ यस्मिन् कासे तं वस्तिभिरुपाचरेत्। सपित्तञ्च वातकासमौर्ध्वभक्तिकैर्भक्तसमनन्तरं पीयमानैर्घृतैर्जयेत् क्षीरैश्च। और्ध्वभक्तिकैरिति। ऊर्ध्वं भक्तादिति मयूरव्यंसकादित्वात् समासः। अध्यात्मादित्वात् ठञ्। तथा वातघ्नसिद्धैरित्येतदेष्वपि योज्यम्। तथा सकफं वातकासं स्नेहविरेचनैरुपाचरेत्॥

शशिलेखा

क्रमप्राप्तस्य कासस्य चिकित्सां प्रदर्शयितुमध्याय आरभ्यते । निदानोक्तक्रमस्याश्रयणात् प्रथमं केवलेत्यादिना वातकासचिकित्सोच्यते । स्नेहैर्घृतादिभिर्यथायोग्यम् । वातघ्नानि शोधनादिगणपठितानि भद्रदारुनतकुष्ठादीनि । पेयादिभिरवगाहान्तैर्घृतादियोगात् स्निग्धैः अभ्यङ्गस्यातिशयप्रदर्शनार्थं विशेषणम् । विट् बद्धा कठिना वातो विबद्धः असम्यग्वाही । घृतैरेवोर्ध्वभक्तिकैः क्षीरैरिति सामान्येन । सपित्तं सकफं चेत्यनिलजकासविशेषणम् ॥

अथ स्नेहानाह—

गुळूचीकण्टकारीभ्यां पृथक् त्रिंशत्पलाद्रसे ॥ ३ ॥
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ।

सर्वाङ्गसुन्दरी

गुळूचीत्यादि ॥ गुळूच्याः कण्टकार्याश्च पृथक् प्रत्येकं त्रिंशत्पलं तस्माद्यो रसस्तस्मिन् घृतात् प्रस्थः सिद्धो वातकासादिजित् । तिस्रोऽपि पञ्चम्य एता अपेक्षितक्रियेऽपादाने बोध्याः ॥

शशिलेखा

गुळूचीकण्टकार्योः षष्टिः पलानि ततो निष्पीडितो रसो यथासंभवं तस्यालाभे क्वाथकल्पनया क्वाथः ॥

क्षाररास्नावचाहिङ्गुपाठायष्ट्याह्वधान्यकैः ॥ ४ ॥
द्विशाणैः सर्पिषः प्रस्थं पञ्चकोलयुतैः पचेत् ।
दशमूलस्य निर्यूहे पीतो मण्डानुपायिना ॥ ५ ॥
सकासश्वासहृत्पार्श्वग्रहणीरोगगुल्मनुत् ।

सर्वाङ्गसुन्दरी

क्षाररास्नेत्यादि ॥ क्षारादिभिः पञ्चकोलयुतैर्द्विशाणमात्रैः कल्कैर्दशमूलक्वाथे सर्पिषः प्रस्थं पचेत् । स च सर्पिःप्रस्थो मण्डानुपायिना पीतः कासादिजित् ॥

शशिलेखा

क्षारादीनां पञ्चकोलान्तानां प्रत्येकमर्धकर्षः। दशमूलक्वाथो घृताच्चतुर्गुणः। सह श्वासेन वर्तते यः कासः स तथोक्तः ॥

द्रोणेऽपां साधयेद्रास्नादशमूलशतावरीः ॥ ६ ॥

पलोन्मिता द्विकुडुवं कुलत्थं बदरं यवम्।
तुलार्धं चाजमांसस्य तेन साध्यं घृताढकम् ॥ ७ ॥

समक्षीरं पलांशैश्च जीवनीयैः समीक्ष्य तत्।
प्रयुक्तं वातरोगेषु पाननावनवस्तिभिः ॥ ८ ॥

पञ्च कासान् शिरःकम्पं योनिवंक्षणवेदनाम्।
सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्ध्वानिलान् जयेत् ॥ ९ ॥

सर्वाङ्गसुन्दरी

द्रोण इत्यादि ॥ रास्नादीनि पलोन्मितानि कुलत्थबदरयवान् द्विकुडुवोन्मितानाजमांसस्य पञ्चाशत्पलानि जलद्रोणे पाचयेत्। तेन क्वाथेन घृताढकं साध्यम्। तुल्यक्षीरं पालिकैर्जीवनीयैर्जीवन्तीकाकोल्यादिभिस्तद्घृतं समीक्ष्य देशकालादीनालोच्य पानादिभिः प्रयुक्तं पञ्चकासादीन् जयति ॥

शशिलेखा

रास्नादीनां द्वादशपलानि कुलत्थादीनां प्रत्येकमष्टौ पलानि आजमांसस्य पलानि पञ्चाशदिति पानीयपलशतपञ्चकेन सद्वादशपलेन साधयेत्। तेनेति सिद्धेन साधिप्रयोगान्मांसवन्मांसपाकावधिरस्य सिद्धता। चरके तु पठितं "पादशेषेण तेन चे"ति। जीवनीया उक्ताः। तैः पलांशैः समेन क्षीरेण युक्तं घृताढकं पचेत्। समीक्ष्येति। बृंहणीयत्वं सम्यग्विकल्प्य। सर्वाङ्गरोगा नानाविधवातव्याधयः। ऊर्ध्वं प्रवृत्तोऽनिल ऊर्ध्वानिलः। सहशब्देन तावपि जयेदित्युक्तम् ॥

विदार्यादिगणक्वाथकल्कसिद्धश्च कासजित्।
[1]अशोकबीजक्षवकजन्तुघ्नाञ्जनपद्मकैः ॥ १० ॥

---

1 അശോകബീജം=കടുക്ക (ഹരിതകീബീജം) ക്ഷവകം=കാട്ടുതുത്താവ്. (കരിന്തുമ്പ എന്നും)

सविडैश्च घृतं सिद्धं तच्चूर्णं च घृताप्लुतम् ।
लिह्यात् पयश्चानुपिबेदाजं कासाभिपीडितः ॥ ११ ॥

सर्वाङ्गसुन्दरी

विदार्यादीत्यादि ॥ विदार्यादिगणस्य क्वाथकल्काभ्यां च सिद्धं सर्पिः कासजित् । अशोकबीजादिभिर्विडसहितैर्घृतं सिद्धं च कासजित् । तेषां वाऽशोकबीजादीनां चूर्णं घृताप्लुतं लिह्यात् । अनु पश्चाच्च छागं क्षीरं कासेनाभिपीडितः पिबेत् ॥

शशिलेखा

विदार्यादिगणस्य क्वाथः स्नेहाच्चतुर्गुणः कल्कश्चतुर्थांशः । इदञ्च घृतं वातपित्तकासे विधेयम् । अशोकबीजादीनि घृताच्चतुर्थांशानि पानीयं चात्र घृतसममिच्छन्ति । तदित्यशोकबीजादिपरामर्शः ॥

विडङ्गं नागरं रास्ना पिप्पली हिङ्गु सैन्धवम् ।
भार्ङ्गी क्षारश्च तच्चूर्णं पिबेद्वा घृतमात्रया ॥ १२ ॥

सकफेऽनिलजे कासे श्वासहिध्माहताग्निषु ।
दुरालभां शृङ्गवेरं शठीं रास्नां सितोपलाम् ॥ १३ ॥

लिह्यात् कर्कटशृङ्गीश्च कासे तैलेन वातजे ।
दुस्पर्शां पिप्पलीं मुस्तां भार्ङ्गीं कर्कटकीं शठीम् ॥ १४ ॥

पुराणगुडतैलाभ्यां चूर्णितान्यवलेहयेत् ।
तद्वत्सकृष्णां शुण्ठीश्च सभार्ङ्गीं तद्वदेव च ॥ १५ ॥

पिबेच्च कृष्णां कोष्णेन सलिलेन ससैन्धवाम् ।
मस्तुना ससितां शुण्ठीं दध्ना वा कणरेणुकाम् ॥ १६ ॥

पिबेद्बदरमज्ज्ञो वा मदिरादधिमस्तुभिः ।
अथवा पिप्पलीकल्कं घृतभृष्टं ससैन्धवम् ॥ १७ ॥

सर्वाङ्गसुन्दरी

विडङ्गमित्यादि ॥ अथवा विडङ्गादिचूर्णं घृतस्य मात्रया ह्रस्वया पिबेद्वातजे सकफे कासे श्वासादिषु च । उक्तञ्च सङ्ग्रहे—"तत्र दुर्बलमन्दाग्नि-

बालवृद्धसुखात्मकैः अपथ्यरिक्तकोष्ठत्वज्वरातीसारकासिभिः ह्रस्वा पेये" त्यादि। दुरालभादीन् कर्कटशृङ्गीञ्च वातजे कासे तैलेन लिह्यात्। दुस्पर्शादीनि चूर्णितानि वातजे कासे पुराणगुडतैलाभ्यामवलेहयेत्। तथैव पिप्पलीसहितां शुण्ठीं पुराणगुडतैलाभ्यामवलेहयेत्। तद्वदेव पुराणगुडतैलाभ्यां भार्ङ्गीसहितां शुण्ठीञ्चावलेहयेत्। पिप्पलीं च कदुष्णेन जलेन ससैन्धवां सैन्धवसहितां पिबेत्। मस्तुना सशर्करां शुण्ठीं पिबेत्। अथवा दध्ना युक्तं पिप्पलीरेणुकं पिबेत। अथवा बदरस्य मज्ज्ञो मदिरादिभिः पिबेत्। बहुवचनोपादानाच्च मदिरयाऽथवा दध्ना मस्तुना वेत्येवं द्रष्टव्यम्। न तु दध्नो मस्त्विति। अथवा पिप्पलीकल्कं घृतभृष्टं सैन्धवयुक्तं पिबेन्मदिरादिभिः॥

शशिलेखा

विळङ्गादिचूर्णोपयोगे घृते मात्राशब्दः स्तोकपर्यायः। तच्च विळङ्गादिचूर्णं वातकासे सश्लेष्मणि हितं श्वासादिषु च। दुरालभादीन् कर्कटशृङ्गीसहितांस्तैलेन लिह्याद्वातजे कासे। द्वितीयं दुस्पर्शाद्यं सुबोधम्। तद्वदिति कृष्णाशुण्ठ्योः पुराणगुडतैलाभ्यां प्रयोगः। तद्वदेव भार्ङ्गीशुण्ठ्योः। सैन्धवपिप्पल्योरुष्णोदकेन प्रयोगः। सिताशुण्ठ्योर्मस्तुना। दध्ना कणरेणुकाः पिप्पलीबीजानि। तथा बदरमज्ज्ञो रेणुकाः मदिरया वा दद्ध्ना वा मस्तुना वा। पिप्पलीनां कल्को जलपिष्टः सैन्धवयुक्तेन घृतेन भृष्टः क्रियते॥

**कासी सपीनसो धूमं स्नैहिकं विधिना पिबेत्।**
**हिध्माश्वासोक्तधूमांश्च क्षीरमांसरसाशनः ॥ १८ ॥**

**ग्राम्यानूपौदकैः शालियवगोधूमषष्टिकान्।**
**रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान् ॥ १९ ॥**

सर्वाङ्गसुन्दरी

**कासीत्यादि ॥** कासी पीनसी च स्नैहिकं धूमं विधिना पिबेत्। क्षीरमांसरसाशनो हिध्मोक्तान् श्वासोक्तांश्च धूमान् पिबेत्। ग्राम्यादिजैर्मांसरसैरथवा माषात्मगुप्तानां यूषैः शाल्यादीन् हितानाशयेत्। हितानिति देशकालादिसात्म्यवशाद्यवाद्यन्यतमं यत् पथ्यं तत् भुञ्जीतेति प्रतिपादयति॥

शशिलेखा

स्नैहिकं धूमं धूमविधावुक्तं हिद्ध्माश्वासे ये धूमा वक्ष्यन्ते, तांश्च सेवेत क्षीरमांसरसाशनः सन् । ग्राम्यादिमांसकृतै रसैर्माषात्मगुप्ताकृतैर्वा यूषैः शालियवादीन् हितान् पथ्यान् भोजयेत् ॥

यवानी[1]पिप्पलीबिल्वमध्यनागरचित्रकैः ।
रास्नाजाजीपृथक्पर्णीपलाशशटिपौष्करैः ॥ २० ॥

सिद्धां स्निग्धाम्ललवणां पेयामनिलजे पिबेत् ।
कटीहृत्पार्श्वकोष्ठार्तिश्वासहिध्माप्रणाशनीम् ॥ २१ ॥

दशमूलरसे तद्वत् पञ्चकोलगुडान्विताम् ।
पिबेत् पेयां समतिलां क्षैरेयीं वा ससैन्धवाम् ॥ २२ ॥

मात्स्यकौक्कुटवाराहैर्मांसैर्वा साज्यसैन्धवाम् ।
वास्तुको वायसीशाकं कासघ्नः सुनिषण्णकः ॥ २३ ॥

कण्टकार्याः फलं पत्रं बालं शुष्कञ्च मूलकम् ।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौडिकाः ॥ २४ ॥

दधिमस्त्वारनालाम्लफलाम्बुमदिराः पिबेत् ।

सर्वाङ्गसुन्दरी

**यवानीत्यादि** ॥ यवान्यादिभिः सिद्धां स्निग्धाम्ललवणां पेयां वातजे कासे पिबेत् । किंभूताम्---कट्याद्यार्तिश्वासहिद्ध्माप्रणाशनीम् । तद्वत् पूर्वोक्तगुणाम् । दशमूलक्काथे सिद्धां पञ्चकोलगुडयुतां पेयां पिबेत् । क्षैरेयीं क्षीरसंस्कृतां वा पेयां वातजे कासे पिबेत् । किंभूताम्—समतिलां तिलसहितां तथा ससैन्धवाम् । अथवा मात्स्याद्यैर्मांसैः साधितां सघृतसैन्धवां पेयां पिबेत् । वास्तुकादयः शाकविशेषास्तैलादयः स्नेहा भक्ष्याः क्षीरादिसम्बन्धिनो हिताः । क्षीरञ्चेक्षुरसश्च गुडश्च तेषामिमे क्षीरेक्षुरसगौडिकाः । द्वन्द्वात् परं यत् श्रूयते तत्

---

1 യവാനീ=ജീരകം അജാജീ=അയമോദകം. പൃഥക്പർണീ=ഓരില. വായസീശാകം=കരിന്താളി. കാസഘ്നം=പൊന്നാവീരം. ആരനാളം=കാഞ്ചികം.

सर्वैः सम्बध्यत इति भाष्यकारवचनात् सर्वैरप्यत्र सम्बन्धः। तेन क्षीरसम्बन्धिनश्चेक्षुरससम्बन्धिनो गुडसम्बन्धिनश्च भक्ष्या हिता इत्यवतिष्ठते। तथा दधिमस्त्वादीनि पिबेत्। इति वातजे कासे प्रायेणोपयोग्यान्नपानमुद्दिष्टम् ॥

शशिलेखा

अनिलजे कासे यवान्यादिभिः सिद्धां डाडिमादिभिरम्लां च पेयां पिबेत्। दशमूलरसे पञ्चकोलगुडयुताम्। तद्वत् कटीरुगादिनाशिनीत्यर्थः। समशालितिलां ससैन्धवमथवा क्षैरेयीम्। मात्स्यादिभिर्मांसैः पेया घृतसैन्धवयुक्ता। वास्तुकादिशाकं कासे पथ्यम्। स्नेहास्तैलादयस्तैलपूर्वाः। भक्ष्या नानाविधाः। क्षीरादीनां पिबेदित्यनेन संबन्धः। गुडेनकृतं गौडिकम्। सुबोधम् ॥

**पित्तकासे तु सकफे वमनं सर्पिषा हितम् ॥ २५ ॥**
**तथा मदनकाश्मर्यमधुकक्वथितैर्जलैः।**
**फलयष्ट्याह्वकल्कैर्वा विदारीक्षुरसाप्लुतैः ॥ २६ ॥**
**पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम्।**
**युञ्ज्याद्विरेकाय युतां घनश्लेष्मणि तिक्तकैः ॥ २७ ॥**
**हृतदोषो हिमं स्वादु स्निग्धं संसर्जनं भजेत्।**
**घने कफे तु शिशिरं रूक्षं तिक्तोपसंहितम् ॥ २८ ॥**

सर्वाङ्गसुन्दरी

**पित्त इत्यादि ॥** पित्तजे कासे तु किंभूते सकफे बहुकफे न कफमात्रवति। अत एव वक्ष्यति—"पित्तकासे तनुकफे विरेकाय त्रिवृता"मिति। तस्मादत्रार्थात् बहुकफत्वं बोध्यम्। न केवलं सर्पिषा वमनं हितम्। यावन्मदनादिभिः क्वथितैर्जलैरपि वमनमवस्थावशाद्धितम्। अथवा मदनफलमधुककल्कैर्विदार्यादिरसाप्लुतैर्वमनं हितम्। पित्तजे कासे तनुकफे अघनश्लेष्मणि त्रिवृतां मधुरैर्युतां विरेकाय युञ्ज्यात्। घनकफे तिक्तकैः सह त्रिवृतां युञ्ज्यात्। हृतदोषो नरो हिमं मधुरं स्निग्धं संसर्जनं विरेकादनन्तरं पेयादिकं कर्म भजेत्। घने तु कफे शीतं तथा रूक्षं तिक्तयुक्तं संसर्जनं भजेत् ॥

शशिलेखा

सकफे यत्र मुखेन कफप्रवृत्तिः तत्र वमनद्रव्ययुक्तेन सर्पिषा वमनम्। अथवा

मदनादिकथितैर्जलैः। अथवा मदनमधुयष्ट्योः कल्को विदारीरसेन चेक्षुरसेन चेषद्युक्त इति। तनुकफे पित्तकासे मधुरैरौषधैर्युक्तां त्रिवृताम्। घने कफे तु तिक्तकैर्युक्तां त्रिवृतां विरेकाय युञ्ज्यात्। तया त्रिवृतया हृतदोषस्सन् शीतादिगुणं संसर्जनं पेयादिक्रमं भजेत्। घनकफे पित्तकासे तु शीतरूक्षं पेयादिकं तिक्तोपसंहितं मिश्रितम्॥

लेहः पैत्ते सिताधात्रीक्षौद्रद्राक्षाहिमोत्पलैः।
सकफे साब्दमरिचः सघृतः सानिले हितः ॥ २९ ॥
मृद्वीकार्धशतं त्रिंशत् पिप्पलीः शर्करापलम्।
लेहयेन्मधुना गोर्वा क्षीरपस्य शकृद्रसम् ॥ ३० ॥
त्वगेलाव्योषमृद्वीकापिप्पलीमूलपौष्करैः।
लाजमुस्तशटीरास्नाधात्रीफलविभीतकैः ॥ ३१ ॥
शर्कराक्षौद्रसर्पिर्भिर्लेहो हृद्रोगकासहा।

### सर्वाङ्गसुन्दरी

लेह इत्यादि॥ पित्तकासे सितादिभिर्लेहो हितः सकफे पित्ते मुस्तमरिचाभ्यां सहितो लेहो हितः। सानिले पित्ते सघृतो लेहो हितः। तथा मृद्वीकागोळकान् पञ्चाशत् त्रिंशत् पिप्पलीः शर्करापलञ्च मधुना लेहयेत्। गोर्वा वत्सस्य क्षीरपस्य क्षीरवृत्तेः शकृद्रसं मधुना लेहयेत्। त्वगेलादिभिर्लेहो हृद्रोगकासहा भवति॥

### शशिलेखा

पित्तकासे सितादिभिर्लेहः। सकफे पैत्ते मुस्तमरिचाभ्यां युक्तः सितादिभिर्लेहः। सानिले तु पैत्ते अब्दमरिचाभ्यां विना सघृतः सितादिभिर्हितः। मृद्वीकाफलानि पञ्चाशत्। फलानां संख्याशब्देन केवलेन प्रयोगे उक्तमानं न नेच्छन्ति। पिप्पलीफलानि त्रिंशत्। शर्करायाः पलमित्येतत् माक्षिकेणावलेहयेत्। अथवा पुंगवस्य क्षीरवृत्तेः संबन्धि यः शकृतो रसः तं मधुना लेहयेत्। त्वगादीनां शर्करान्तानां क्षौद्रसर्पिर्भ्यां लेहो हृद्रोगकासयोर्हन्ता॥

मधुरैर्जाङ्गलरसैर्यवश्यामाककोद्रवाः ॥ ३२ ॥

मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ।
घनश्लेष्मणि लेहाश्च तिक्तका मधुसंयुताः ॥ ३३ ॥

शालयस्स्युस्तनुकफे षष्टिकाश्च रसादिभिः ।
शर्कराम्भोऽनुपानार्थं द्राक्षेक्षुस्वरसाः पयः ॥ ३४ ॥

सर्वाङ्गसुन्दरी

**मधुरैरिति** ॥ घनश्लेष्मणि पित्तकासे जाङ्गलै रसैर्मधुरैस्तथा मुद्गादि-यूषैस्तथा तिक्तकैश्शाकैश्च सह यवादयो मात्रया परिमिता लेहाश्च तिक्तद्रव्ययुता मधुयुक्ता हिताः । तनुकफे पित्ते शालयः षष्टिकाश्च रसादिभिर्हिताः स्युर्भवेयुः । अनुपानार्थं शर्कराम्भो हितं द्राक्षेक्षुस्वरसाः पयश्च ॥

शशिलेखा

पित्तकासे यवादयो जाङ्गलानां मांसानां रसैर्मधुरैरम्लरहितैः सह मात्रया हितास्तथा मुद्गादीनां यूषैः शाकैश्च पटोलादिभिस्तिक्तकैः । घनश्लेष्मणि पित्तकासे तिक्तकैर्द्रव्यैर्मधुसहिता लेहाश्च हिताः । तनुकफे पैत्ते शालयः षष्टिकाश्च रसयूषशाकादिभिः । सुबोधम् ॥

काकोलीबृहतीमेदाद्वयैः सवृषनागरैः ।
पित्तकासे रसक्षीरपेयायूषान् प्रकल्पयेत् ॥ ३५ ॥

सर्वाङ्गसुन्दरी

**काकोलीत्यादि** ॥ काकोल्यादिभिर्मांसरसादीन् पित्तकासे प्रकल्पयेत् ।

शशिलेखा

काकोल्यादीनां क्वाथेन पित्तकासिनो मांसरसादीन् प्रकल्पयेत् । प्रकल्प-येदित्यनेन चूर्णितैरपि संयुक्ता रसादय इष्यन्ते ॥

द्राक्षां कणां पञ्चमूलं तृणाख्यं च पचेज्जले ।
तेन क्षीरं शृतं शीतं पिबेत्समधुशर्करम् ॥ ३६ ॥

साधितां तेन पेयां वा सुशीतां मधुनाऽन्वितताम् ।
षडीह्रीबेरबृहतीशर्कराविश्वभेषजम् ॥ ३७ ॥
पिष्ट्वा रसं पिबेत्पूतं वस्त्रेण घृतमूर्छितम् ।

सर्वाङ्गसुन्दरी

**द्राक्षामित्यादि** ॥ तथा द्राक्षादीन् जले पचेत् । तेन जलेन क्वथितं क्षीरं शीतं मधुशर्करायुतं पिबेत् । तेन वा जलेन साधितां पेयां सुशीतां माक्षिकयुतां पिबेत् । षड्यादीन् जलेन पिष्ट्वा वस्त्रेण पूतं रसं घृतमिश्रितं पिबेत् ॥

शशिलेखा

द्राक्षादिक्काथेन समं क्षीरं श्रृतं शीतं सन्मधुशर्कराभ्यां सह पिबेत् । तेन वा द्राक्षादिक्कथितजलेन साधितां पेयां केवलेन मधुनान्वितां पिबेत् । जलेन षड्यादिकं पिष्ट्वा तद्रसं वस्त्रपूतं घृतमिश्रितं पिबेत् ॥

शर्करां जीवकं मुद्गमाषपर्ण्यौ दुरालभाम् ॥ ३८ ॥
कल्कीकृत्य पचेत्सर्पिः क्षीरेणाष्टगुणेन तत् ।
पानभोजनलेहेषु प्रयुक्तं पित्तकासजित् ॥ ३९ ॥
लिह्याद्वा चूर्णमेतेषां कषायमथवा पिबेत् ।

सर्वाङ्गसुन्दरी

**शर्करामित्यादि** ॥ शर्करादीन् कल्कीकृत्याष्टगुणेन क्षीरेण सर्पिः पचेत् । तच्च सर्पिः पानादिषु प्रयुक्तं पित्तकासजित् । एतेषां वा शर्करादीनां चूर्णं लिह्यात् । अथवैषामेव कषायं पिबेत् ॥

शशिलेखा

शर्करादीनि स्नेहाच्चतुर्थांशेन । जलमौषधस्य वीर्यग्रहणाय स्नेहसमम् । अष्टगुणेन क्षीरेण सर्पिः पचेत् । तत् पक्वं पानादिषु प्रयुक्तं पित्तकासनुत् । एतेषां वाऽनन्तरोक्तानां घृतद्रव्याणां चूर्णं लिह्यात् । मधुनेत्यर्थाल्लभ्यते । अथवा यैरेव द्रव्यैर्घृतान्युक्तानि, तेषां कषायं पिबेदिति पित्तकासः ॥

कफकासी पिबेदादौ सुरकाष्ठात् प्रदीपितात् ॥ ४० ॥

स्नेहं परिस्रुतं व्योषयवक्षारावचूर्णितम् ।
स्निग्धं विरेचयेदूर्ध्वमधो मूर्ध्नि च युक्तितः ॥ ४१ ॥

तीक्ष्णैर्विरेकैर्बलिनं संसर्गी चास्य योजयेत् ।
यवमुद्गकुलत्थाद्यैरुष्णरूक्षैः कटूत्कटैः ॥ ४२ ॥

कासमर्दकवार्ताकव्याघ्रीक्षारकणान्वितैः ।
धान्वबैलरसैः स्नेहैस्तिलसर्षपनिम्बजैः ॥ ४३ ॥

सर्वाङ्गसुन्दरी

कफकासीत्यादि ॥ कफकासी पूर्वं सुरकाष्ठात् प्रदीपिताद्यः स्रुतः स्नेहस्तं व्योषयवक्षारावचूर्णितं पिबेत् । स्निग्धञ्च सन्तमनन्तरं विरेचयेत् । ऊर्ध्वमधो मूर्ध्नि च युक्तितो युक्त्या । यथा बलहानिर्न स्यादिति भावः । कैर्विरेचयेत्—तीक्ष्णैर्विरेकैः । किंभूतमातुरम्—बलवन्तम् । संसर्गी पेयादिपरिपाटीञ्चास्य योजयेत् । यवादिभिर्यथायोगमुष्णरूक्षैः तथा कटूत्कटैः प्रभूतकटुकैः कासमर्दकादियुक्तैः । धन्वनि भवा धान्वा जाङ्गलाः । बिलेषु भवा बैलाः विलेशयाः । तेषां रसास्तैः मांसरसैः सहेत्यर्थः । तथा स्नेहैस्तिलादिजैः सह ॥

शशिलेखा

कफकासीत्यादि सुबोधम् । सुरकाष्ठं देवदारुः । स्निग्धमिति । अनेनैव स्नेहेन त्रिभिर्मार्गैः युक्तितः युक्त्या वातरक्षादिरूपया विरेचयेत् । ऊर्ध्वमिति वमनेन । अध इति विरेचनेन । मूर्ध्नीति नस्येन । तीक्ष्णैः पुनर्द्रव्यैस्त्रिधापि बलिनमेव विरेचयेत् । अबलन्तु मृदुभिर्विरेकैरित्यर्थः । अस्य च विरिक्तस्य कासिनः संसर्गी पेयादिक्रमाख्यां योजयेत् । केनेत्याह—यवाद्यन्नैः । किंभूतैः—उष्णै रूक्षैश्च तथा कटुभिर्मरिचादिभिरुत्कटैः कासमर्दादिभिर्नानाविधेन प्रकारेणान्वितैस्तथा धान्वैर्जाङ्गलै रसैर्बैलैश्च विलेशयप्रभवैस्तिलादिजैश्च स्नेहैः ॥

दशमूलाम्बु घर्माम्बु मद्यं मध्वम्बु वा पिबेत् ।
मूलैः पौष्करशम्याकपटोलैः संस्थितं निशाम् ॥ ४४ ॥

पिबेद्वारि सहक्षौद्रं कालेष्वन्नस्य वा त्रिषु ।

सर्वाङ्गसुन्दरी

**दशमूलेत्यादि** ॥ दशमूलाम्ब्वादीन् पिबेत् । अथवा मूलैः पौष्करादिभिर्निशासंस्थितं रात्रिस्थितं वारि क्षौद्रेण सह प्रातः पिबेत् । अथवाऽन्नस्य त्रिषु कालेष्वादिमध्यावसानलक्षणेषु पिबेत् ॥

शशिलेखा

तृषितश्च दशमूलाम्ब्वादिकं पिबेत् । घर्माम्बु उष्णोदकम् । पौष्करादिमूलैः सकलां रात्रिं समन्वितं वारि श्वो भूतेषु त्रिषु कालेष्वन्नस्य पिबेत् । भोजनस्यारम्भमध्यपर्यवसानेष्वित्यर्थः । पूर्वप्रयोगापेक्षया विकल्पः ॥

पिप्पलीपिप्पलीमूलं शृङ्गिबेरं विभीतकम् ॥ ४५ ॥
शिखिकुक्कुटपिञ्छानां मषी क्षारो यवोद्भवः ।
विशालापिप्पलीमूलं त्रिवृता च मधुद्रुताः ॥ ४६ ॥
कफकासहरा लेहास्त्रयः श्लोकार्धयोजिताः ।
मधुना मरिचं लिह्यान्मधुनैव च जोङ्गकम् ॥ ४७ ॥
पृथग्रसांश्च मधुना व्याघ्रीवार्ताकभृङ्गजान् ।
कासघ्नस्याश्वशकृतः सुरसस्यासितस्य च ॥ ४८ ॥

सर्वाङ्गसुन्दरी

**पिप्पलीत्यादि** ॥ पिप्पल्यादयस्त्रयो लेहाः श्लोकार्धैर्योजिता मधुना द्रुताः द्रवीकृताः कफकासहरा भवन्ति । तथा मधुना मरिचं लिह्यात् । माक्षिकेणैव जोङ्गकमगरुं लिह्यात् । व्याघ्र्यादिजान् रसान् पृथक् पृथङ्मधुना लिह्यात् ॥

शशिलेखा

पिप्पलीशिखिपिञ्छविशालादिभिः श्लोकार्धैः त्रयो माक्षिकद्रवा लेहाः कफकासहरा भवन्ति । सुबोधम् । जोङ्गकं कृष्णागरु । कासघ्नादीनां षष्ठ्यन्तानां पृथग्रसो विज्ञेयः । कासघ्नः कासमर्दः । असित इति सुरसविशेषणम् ॥

देवदारुषटीरास्नाकर्कटाख्यादुरालभाः ।
पिप्पली नागरं मुस्ता पथ्या धात्री सितोपला ॥ ४९ ॥

लाजाः सितोपला सर्पिः शृङ्गीधात्रीफलाभयाः ।
मधुतैलयुता लेहास्त्रयो वातानुगे कफे ॥ ५० ॥

सर्वाङ्गसुन्दरी

**देवदार्वित्यादि ॥** देवदार्वादयो मधुतैलयुता लेहास्त्रयः श्लोकार्धगदिता वातानुगे कफे स्युः । अत्र शृङ्गीधात्रीफलमिति[1] केचिद्विशिष्टमामलकमाहुः । अन्ये तु शृङ्गी कर्कटशृङ्गी, मदनफलमिति व्याचक्षते ॥

शशिलेखा

देवदार्वादिभिः पिप्पल्यादिभिर्लाजादिभिश्च त्रयो माक्षिकतैलयुता लेहा वातानुगे कफे कफकासे भवन्ति ॥

द्वे पले डाडिमादष्टौ गुडाद्व्योषात्पलत्रयम् ।
रोचनं दीपनं स्वर्यं पीनसश्वासकासजित् ॥ ५१ ॥

गुडक्षारोषणकणाडाडिमं श्वासकासजित् ।
क्रमात्पलद्वयार्धाक्षकर्षाक्षार्धपलोन्मितम् ॥ ५२ ॥

सर्वाङ्गसुन्दरी

**द्वे पल इत्यादि ॥** डाडिमस्य द्वे पले गुडादष्टौ त्रिकटुकात् पलत्रयमित्येतत् डाडिमाद्यं चूर्णं रोचनादिगुणयुतं पीनसादीन् जयेत् । गुडादीनां क्रमेण पलद्वयमर्धकर्षं कर्षं कर्षार्धं पलप्रमाणं श्वासकासजित् ॥

शशिलेखा

द्वे पल इत्यादि सुबोधम् । गुडादिकं क्रमात् पलद्वयादिरूपोन्मानमितं श्वासकासजित् । गुडस्य पलद्वयं यवक्षारस्यार्धकर्षः मरिचस्य कर्षः पिप्पलीनामर्धकर्षः डाडिमस्य पलमिति क्रमार्थः ॥

पिबेज्ज्वरोक्तं पथ्यादि सशृङ्गीकं च पाचनम् ।

---

1. ശൃംഗീധാത്രീഫലം = ചെറുനെല്ലിക്ക.

अथवा दीप्यकत्रिवृद्विशालाघनपौष्करम् ॥ ५३ ॥
सकणं क्वथितं मूत्रे कफकासी जलेऽपि वा ।

सर्वाङ्गसुन्दरी

पिबेदिति ॥ तथा ज्वरचिकित्सितोक्तं पथ्याकुस्तुम्बरीत्यादिकं पाचनं कर्कटशृङ्गीसहितं पिबेत् पूर्वगुणम् । अथवा दीप्यकादिकं गोमूत्रे क्वथितं जलेऽपि वा क्वथितं पिप्पलीसहितं कफकासी पिबेत् ॥

शशिलेखा

ज्वरोक्तं पथ्यादि "रुग्विबन्धानिलश्लेष्मयुक्ते दीपनपाचनम् । अभया-पिप्पलीमूलशम्याककटुकाघनम् ॥" तत् सशृङ्गीकं पिबेत् । दीप्यकादिकं पिप्पल्यन्तं गोमूत्रे जले वा क्वथितं कफकासी पिबेत् ॥

तैलभृष्टश्च वैदेहीकल्काक्षं ससितोपलम् ॥ ५४ ॥
पाययेत्कफकासघ्नं कुलत्थसलिलाप्लुतम् ।

सर्वाङ्गसुन्दरी

तैलभृष्टमित्यादि ॥ पिप्पलीकल्ककर्षं सशर्करं तैलेन भृष्टं कुलत्थसलिलाप्लुतं कफकासघ्नं पाययेत् ॥

शशिलेखा

वैदेह्याः पिप्पल्याः कल्कस्याक्षं कर्षं तैलेन भर्जितं सत् शर्करया दोषमात्रया युक्तं कुलत्थक्वथितसलिलेन पाययेत् । तद्धि कफकासघ्नम् ॥

दशमूलाढके प्रस्थं घृतस्याक्षसमैः पचेत् ॥ ५५ ॥
पुष्कराह्वशठीबिल्वसुरसव्योषहिङ्गुभिः ।
पेयानुपानं तत्सर्ववातश्लेष्मामयापहम् ॥ ५६ ॥
निर्गुण्डीपत्रनिर्यासससाधितं कासजिद्घृतम् ।
घृतं रसे विडङ्गानां व्योषगर्भं च साधितम् ॥ ५७ ॥

पुनर्नवसिनाडिकासुरसकासमर्दामृता-[1]
पटोलबृहतीफणिज्जकरसैः पयःसंयुतैः ।
घृतं त्रिकटुना च सिद्धमुपयुज्य संजायते
न कासविषमज्वरक्षयगुदाङ्कुरेभ्यो भयम् ॥ ५८ ॥

सर्वाङ्गसुन्दरी

दशमूलेत्यादि ॥ दशमूलकाथाढके घृतस्य प्रस्थं पुष्करमूलादिभिः प्रत्येकं कर्षप्रमाणैः कल्कीकृतैः पचेत् । तच्च पेयानुपानं सर्ववातकफामयघ्नम् । निर्गुण्डीपत्रस्वरससाधितं कासजित् स्यात् । विडङ्गानां रसे व्योषगर्भं साधितं घृतं च पूर्वगुणम् । पुनर्नवादिरसैः पयसा युतैस्त्रिकटुना कल्केन च सिद्धं घृतमुपयुज्य कासादिभ्यो भयं न जायते । "वसुग्रहयुता जसौ जसयलाश्च पृथ्वी गुरुः" । अत्र पुनर्नवादिरसो घृताच्चतुर्गुणः क्षीरं घृतसमं घृतं व्योषाच्चतुर्गुणमिति पाकक्रमः ॥

शशिलेखा

दशमूलाढक इति । द्रवपाठासंभवाच्च दशमूलरसस्याढको विज्ञेयः । दशमूलस्याढकः पुनर्घृतप्रस्थेनाभ्यक्ततामेव न प्राप्नोति । अक्षसमैः कार्षिकैः । निर्गुण्डीपत्राणां स्वरसः स्नेहाच्चतुर्गुणः स्नेहश्चतुर्थांशः । निर्गुण्डी शेफालिका तस्याः पत्रम् । सुबोधम् ॥

समूलफलपत्रायाः कण्टकार्या रसाढके ।
घृतप्रस्थं बलाव्योषविडङ्गषड्डिडाडिमैः ॥ ५९ ॥

सौवर्चलयवक्षारमूलामलकपौष्करैः ।
वृश्चीवबृहतीपथ्यायवानीचित्रकर्धिभिः ॥ ६० ॥

मृद्वीकाचव्यवर्षाभूदुरालम्भाम्लवेतसैः ।
शृङ्गीतामलकीभार्ङ्गीरास्नागोक्षुरकैः पचेत् ॥ ६१ ॥

कल्कैस्तत्सर्वकासेषु श्वासहिध्मासु चेष्यते ।
कण्टकारीघृतं ह्येतत्कफव्याधिविनाशनम् ॥ ६२ ॥

---

1. സിനാഡികാ = ചാരണാ (വെളുത്ത തഴുതാമ) തുതുവാള എന്നും.

सर्वाङ्गसुन्दरी

**समूलफलपत्राया इत्यादि ॥** कण्टकार्याः समूलफलपत्राया रसाढके बलादिभिः कल्कैर्घृताच्चतुर्थांशप्रमाणैर्घृतप्रस्थं पचेत् । तच्च सर्पिः सर्वकासादिष्विष्यतेऽभिहितम् । इदञ्च कण्टकारीघृतं कफव्याधिविनाशनम् ॥

शशिलेखा

कण्टकार्या रसो निष्पीडितः । बलादीनि स्नेहाच्चतुर्थांशानि । मूलं पिप्पलीमूलम् । पौष्करं पुष्करमूलम् । चरकविदः पठन्ति—"सौवर्चलयवक्षारपिप्पलीमूलपौष्करैः" इति । ते ह्यामलकानि न पठन्ति ॥

**पचेद्व्याघ्रीतुलां क्षुण्णां वहेऽपामाढकस्थिते ।**
**क्षिपेत् पूते तु सञ्चूर्ण्य व्योषरास्नामृताग्निकान् ॥ ६३ ॥**

**भृङ्गीभार्ङ्गीघनग्रन्थिधन्वयाषान् पलार्धकान् ।**
**सर्पिषः षोडशपलं चत्वारिंशत्पलानि च ॥ ६४ ॥**

**मत्स्यण्डिकायाः शुद्धायाः पुनश्च तदधिश्रयेत् ।**
**दर्वीलेपिनि शीते च पृथक् द्विकुडवं क्षिपेत् ॥ ६५ ॥**

**पिप्पलीनां तवक्षीर्या माक्षिकस्यानवस्य च ।**
**लेहोऽयं गुल्महृद्रोगदुर्नामश्वासकासजित् ॥ ६६ ॥**

सर्वाङ्गसुन्दरी

**पचेदित्यादि ॥** व्याघ्रयास्तुलां क्षुण्णां मर्दितां अपां जलस्य वहे चतुर्द्रोणे पचेत् । आढकस्थिते जले सञ्चूर्ण्य व्योषादीनि अर्धपलप्रमाणानि प्रत्येकं क्षिपेत् । अग्निरेवाग्निकश्चित्रकः । घृतस्य च षोडशपलानि । मत्स्यण्डिकाया विमलायाश्चत्वारिंशत्पलानि । भूयश्च तत् सर्वं पचेत् । दर्वीं लिम्पतीति दर्वीलेपी तस्मिन् दर्वीलेपिनि शीते च लेहे सति प्रत्येकं द्विकुडुबप्रमाणं पिप्पल्यादि क्षिपेत् । अयं लेहो गुल्मादिजित् ॥

शशिलेखा

व्याघ्र्याः पलशतम् । अपां जलस्य वहः पलसहस्रद्वयमष्टचत्वारिंशदधिकम् । आढकमष्टाविंशत्यधिकं पलशतम् । पूतं स्रुतम् । ग्रन्थिः

पिप्पलीमूलम्। मत्स्यण्डिका खण्डादूना शर्करा। शुद्धा निर्मला। अधिश्रयणं पाकाय चुल्यामारोहणम्। पिप्पलीनां द्विकुडुबमष्टौ पलानि। तद्वतुकाक्षीर्याः। माक्षिकस्य द्विकुडुबं षोडशपलानि। अनवशब्देन तद्वत्सरकृतं प्रतिषिध्यते ॥

शमनञ्च पिबेद्धूमं शोधनं बहले कफे।
मनःशिलालमधुकमांसीमुस्तेङ्गुदीत्वचः ॥ ६७ ॥

धूमं कासघ्नविधिना पीत्वा क्षीरं पिबेदनु।
निष्ठ्यूतान्ते गुडयुतं कोष्णं धूमो निहन्ति सः।
वातश्लेष्मोत्तरान् कासानचिरेण चिरन्तनान् ॥ ६८ ॥

सर्वाङ्गसुन्दरी

शमनमित्यादि ॥ तथा शमनं धूमं च पिबेत्। घनश्लेष्मणि शोधनं धूमं पिबेत्। अथ तमेव धूममाह—मनःशिलेत्यादि। एतेषां सम्बन्धिनं धूमं कासघ्नविधिना सूत्रोदितेन पीत्वाऽनु पश्चात् निष्ठ्यूतान्ते कोष्णं क्षीरं गुडान्वितं पिबेत्। स धूमः पीतो वातश्लेष्मोत्तरान् कासांश्चिरन्तनांश्चैव हन्ति। चिरन्तनानिति "सायंचिरमि"त्यादिना त्युः ॥

शशिलेखा

सर्वस्मिन् कफकासे शमनं धूमं पिबेत्। शमनः प्रायोगिको मध्य इति पर्यायाः। यदा तु कफकासे बहळो घनः कफो भवति, तदा शोधनं धूमं पिबेत्। शोधनो विरेचनस्तीक्ष्ण इति पर्यायाः। एतौ धूमविधौ प्रदर्शितौ। मनःशिलादीनां धूमं कासघ्नधूमविधानेन पीत्वा क्षीरं पिबेत्। कासघ्नधूमविधानन्तु—"शरावसम्पुटच्छिद्रे नाडीं न्यस्य दशाङ्गुलामष्टाङ्गुलां वा वक्त्रेण कासवान् धूममापिबेत्" इति सूत्रोदितम्। अत्र च क्षीरं धूमादनु निष्ठ्यूतस्य श्लेष्मणोऽन्ते गुळयुतमीषदुष्णं च पिबेत् ॥

तमकः कफकासे तु स्याच्चेत्पित्तानुबन्धजः।
पित्तकासक्रियां तत्र यथावस्थं प्रयोजयेत् ॥ ६९ ॥

कफानुबन्धे पवने कुर्यात्कफहरां क्रियाम्।
पित्तानुबन्धयोर्वातकफयोः पित्तनाशिनीम् ॥ ७० ॥

वातश्लेष्मात्मके शुष्के स्निग्धमार्द्रे विरूक्षणम् ।
कासे कर्म सपित्ते तु कफजे तिक्तसंयुतम् ॥ ७१ ॥

सर्वाङ्गसुन्दरी

तमक इत्यादि ॥ कफकासे यदि तमकः पित्तानुबन्धजः स्यात्तत्र तमके पित्तकासक्रियामवस्थावशात् प्रयोजयेत् । पवने कफानुबन्धे सति कफकासहरां क्रियां कुर्यात् । पित्तानुबन्धयोर्वातकफयोः पित्तकासनाशिनीं क्रियां विदध्यात् । वातश्लेष्मात्मके शुष्के कासे स्निग्धं कर्म । आर्द्रे तु कासे विरूक्षणं कर्म ॥

शशिलेखा

यत्र तु कफकासे पित्तानुबन्धात् तमकाख्यः श्वासः स्यात्, तत्र कफकासे पित्तकासक्रियां यथावस्थं कुर्यात् । वातकासे तु कफानुबन्धे कफकासहरां क्रियां कुर्यात् । वातकफयोर्मिश्रितयोरपि पित्तानुबन्धे पित्तकासक्रियां कुर्यात् । सुबोधम् । तिक्तसंयुतशब्देन कर्म संबध्यते ॥

क्षतकासचिकित्सामाह—

उरस्यन्तः क्षते सद्यो लाक्षां क्षौद्रयुतां पिबेत् ।
क्षीरेण शालिं[1] जीर्णेऽद्यात् क्षीरेणैव सशर्करम् ॥ ७२ ॥
पार्श्वबस्तिसरुक्चाल्पपित्ताग्निस्तां सुरायुताम् ।
भिन्नविट् तु समुस्तातिविषापाठां सवत्सकाम् ॥ ७३ ॥

सर्वाङ्गसुन्दरी

उरसीत्यादि ॥ अन्तः क्षते उरसि सति सद्यः शीघ्रमेव लाक्षां माक्षिकयुक्तां क्षीरेण पिबेत् । उरःसन्धानजनने लाक्षायाः प्राधान्यात् । तथा चाग्र्यसंग्रहे "लाक्षा सद्यःक्षतघ्नाना" मिति । जीर्णे परिणते तस्मिन्नौषधे क्षीरेणैव सह सशर्करं शालिमद्यात् । पार्श्वबस्त्यादिरुगल्पपित्ताग्निश्च तां लाक्षां सुरायुतां पिबेत् । सुरा मदिरा । भिन्नपुरीषो नरो मुस्तातिविषापाठावत्सकान्वितां लाक्षां पिबेत् ॥

---

1 "शालीन् .........सशर्करान्" इति सङ्ग्रहे पाठः ।

शशिलेखा

अन्तःक्षतशब्देन निदानोक्तं स्मारयति । तस्मिन् लाक्षाक्षौद्रक्षीरे जीर्णे सशर्कराञ्छालीन् क्षीरेणैवाद्यात् । तामिति लाक्षाम् । समुस्तादिकां लाक्षामेव सवत्सकाम् ॥

लाक्षां सर्पिर्मधूच्छिष्टं जीवनीयगणं सिताम् ।
त्वक्क्षीरीं समितं क्षीरे पक्त्वा दीप्तानलः पिबेत् ॥ ७४ ॥
इक्ष्वालिका बिसग्रन्थिपद्मकेसरचन्दनैः ।
शृतं पयो मधुयुतं सन्धानार्थं क्षती पिबेत् ॥ ७५ ॥

सर्वाङ्गसुन्दरी

**लाक्षामित्यादि** ॥ लाक्षादीनि क्षीरे पक्त्वा तत् क्षीरं दीप्ताग्निः पिबेत् । इक्ष्वालिकादिभिः शृतं क्षीरं मधुयुतं सन्धानार्थं सन्धानाय क्षतवात् नरः पिबेत् ॥

शशिलेखा

लाक्षादीनि समानि । जीवनीयगणस्य संयुक्तस्यान्यतमसमत्वम् । मधूच्छिष्टं सिक्थकम् । समित् गोधूमचूर्णम् । तत् सर्वं बहुना क्षीरेण पानयोग्यं पक्त्वा दीप्ताग्निः उरःक्षती पिबेत् । क्षतेऽन्तरुरसि पुरुषः सन्धानार्थमिक्ष्वालिकादिभिः शृतं क्षीरं मधुयुक्तं पिबेत् ॥

यवानां चूर्णमामानां क्षीरे सिद्धं घृतान्वितम् ।
ज्वरदाहे सिताक्षौद्रसक्तून्वा पयसा पिबेत् ॥ ७६ ॥
कासवांश्च पिबेत् सर्पिर्मधुरौषधसाधितम् ।
गुडोदकं वा क्वथितं सक्षौद्रमरिचं हिमम् ॥ ७७ ॥
चूर्णमामलकानां वा क्षीरपक्वं घृतान्वितम् ।
रसायनविधानेन पिप्पलीर्वा प्रयोजयेत् ॥ ७८ ॥

सर्वाङ्गसुन्दरी

**यवानामित्यादि** ॥ ज्वरदाहे सति यवानामामानामनग्निपक्वानां चूर्णं क्षीरे सिद्धं सर्पिर्युतं पिबेत् । अथवा शर्करामाक्षिकयुतान् सक्तून् पयसा पिबेत् ।

1. ഇക്ഷ്വാളികാ = ചെറുകരിമ്പ്. ബിസഗ്രന്ഥി = നിലംപരണ്ട. സമിത് = ഗോതമ്പുപൊടി. ത്വക്ക്ഷീരി = കൂവപ്പൊടി.

कासवांश्च मधुरौषधैः साधितं सर्पिः पिबेत् । अथवा गुडोदकं क्वथितं क्षौद्रमरिचयुतं शीतं पिबेत् । आमलकानां चूर्णं वा क्षीरेण सिद्धं सर्पिर्युतं पिबेत् । रसायनोक्तविधिना वा पिप्पलीः प्रयोजयेत् ॥

शशिलेखा

यवानां चूर्णं क्षीरेण तथा साध्यते, यथा पेयाप्रायो भवति । आमानामित्यनग्निस्पृष्टानां यवानाम् । तच्चूर्णं सर्पिषा युक्तं ज्वरदाहे सति क्षते पिबेत् । अथवा सितादीन् पिबेत् पयसा । कासवानिति प्रकरणात् क्षतकासवान् । मधुरौषधानि रसभेदीयोक्तमधुरस्कन्धपठितानि । सुबोधम् । आमलकचूर्णस्य क्षीरपक्वस्यैव प्रयोगः । पिप्पलीनां रसायनविधिस्तत्रैव वक्ष्यते ॥

**कासी पर्वास्थिशूली च लिह्यात् सघृतमाक्षिकाः ।**
**मधूकमधुकद्राक्षात्वक्क्षीरीपिप्पलीबलाः ॥ ७९ ॥**

**त्रिजातमर्धकर्षांशं पिप्पल्यर्धपलं सिता ।**
**द्राक्षामधूकखर्जूरं पलांशं श्लक्ष्णचूर्णितम् ॥ ८० ॥**

**मधुना गुळिका घ्नन्ति ता वृष्याः पित्तशोणितम् ।**
**कासश्वासारुचिच्छर्दिमूर्छाहिध्मावमिभ्रमान् ॥ ८१ ॥**

**क्षतक्षयस्वरभ्रंशप्लीहशोषाढ्यमारुतान् ।**
**रक्तनिष्ठीवहृत्पार्श्वरुक्पिपासाज्वरानपि ॥ ८२ ॥**

सर्वाङ्गसुन्दरी

**कासीत्यादि ॥** कासवान् पर्वास्थिशूलवांश्च घृतमाक्षिकसहितान् मधूकादीन् लिह्यात् । त्रिजातमर्धकर्षप्रमाणं, पिप्पल्यर्धपलप्रमाणा, शर्करादिकं प्रत्येकं पलांशं श्लक्ष्णचूर्णितं मधुना कृता गुळिका वृष्या पित्तशोणितादीन् घ्नन्ति ॥

शशिलेखा

'पर्वास्थिशूलसंयुक्तः कासी मधूकादिकं सघृतमाक्षिकं लिह्यात् । त्रिजातकाद्या गुळिका सुबोधिनी । इयञ्चैलाद्येति प्रसिद्धा । आढ्यमारुतो वातव्याधावुक्तः ॥

वर्षाभूशर्करारक्तशालितण्डुलजं रजः ।
रक्तष्ठीवी पिबेत् सिद्धं द्राक्षारसपयोघृतैः ॥ ८३ ॥

मधूकमधुकक्षीरसिद्धं वा तण्डुलीयकम् ।
यथास्वं मार्गविसृते रक्ते कुर्याच्च भेषजम् ॥ ८४ ॥

मूढवातस्त्वजामेदः सुराभृष्टं ससैन्धवम् ।
क्षामः क्षीणः क्षतोरस्को मन्दनिद्रोऽग्निदीप्तिमान ॥ ८५ ॥

शृतक्षीरसरेणाद्यात् सघृतक्षौद्रशर्करम् ।

सर्वाङ्गसुन्दरी

**वर्षाभ्वित्यादि** ॥ पुनर्नवादिचूर्णं द्राक्षारसपयोघृतैः सिद्धं रक्तष्ठीवी पिबेत् । अथवा मधूकादिभिः सिद्धं तण्डुलीयकं पिबेत् । मार्गेण च मुखादिना विसृते रक्ते यथायथं रक्तपित्तचिकित्सितोक्तमौषधं कुर्यात । मूढपवनस्तु पुरुषः अजायाः मेदः सुराभृष्टमीषत्सैन्धवमद्यात् । क्षामः क्षीणः क्षतोरस्कोऽल्पनिद्रो दीप्ताग्निः शृतक्षीरस्य सम्बन्धिना सरेण सघृतक्षौद्रशर्करमजामेदोऽद्यात् ॥

शशिलेखा

वर्षाभ्वादीनां चूर्णं द्राक्षारसादिभिः सिद्धं रक्तष्ठीवी पिबेत् । सिद्धमग्निसंयोगेन । सुबोधम् । अस्मिंश्चोरःक्षते कदाचिदतिप्रवृद्धं रक्तमधो नासिकादिना वापि प्रवर्तते । तत्र रक्ते यथास्वं रक्तपित्तवदपि भेषजं कुर्यात् । यस्य तु क्षतकासिनो मूढो नानुलोममार्गप्रवृत्तः प्रबलो वातः सोऽजाया मेदोऽद्यात् । किम्भूतम्—सुराभृष्टं ससैन्धवञ्च । सुरा भृष्टा येनेति वक्तव्ये बहुत्वान्मेदसः प्राधान्यज्ञापनार्थं विपरीतप्रयोगः । यस्तु क्षामत्वादियुक्तः स तदेवाजामेदः शृतक्षीरजातेन सरेण सघृतक्षौद्रशर्करमद्यात् ॥

शर्करां यवगोधूमं जीवकर्षभकौ मधु ॥ ८६ ॥

शृतक्षीरानुपानं वा लिह्यात् क्षीणक्षती कृशः ।
क्रव्यात्पिशितनिर्यूहं घृतभृष्टं पिबेच्च सः ॥ ८७ ॥

पिप्पलीक्षौद्रसंयुक्तं मांसशोणितवर्धनम् ।

न्यग्रोधोदुम्बराश्वत्थप्लक्षसालप्रियङ्गुभिः ॥ ८८ ॥
तालमस्तकजम्बूत्वक् प्रियालैश्च सपद्मकैः ।
साश्वकर्णैः श्रृतात्क्षीरादद्याज्जातेन सर्पिषा ॥ ८९ ॥
शाल्योदनं क्षतोरस्कः क्षीणशुक्रबलेन्द्रियः ।

सर्वाङ्गसुन्दरी

**शर्करामित्यादि** ॥ अथवा यः क्षती क्षतकासी क्षीणः कृशो वा भवति, सः शर्करादिकं लिह्यात् । कथम्—श्रृतक्षीरानुपानम् । स च क्षीणादिः क्रव्यात्पिशितस्य निर्यूहं क्वाथं घृतेन भृष्टं पिबेत् । किम्भूतम्—पिप्पलीक्षौद्रान्वितम् । तच्च मांसशोणितवर्धनं स्यात् । न्यग्रोधादिभिः श्रृतात् क्षीरात् समुद्भूतेन सर्पिषा शाल्योदनं क्षतोरस्कः क्षीणशुक्रादिश्च नरोऽद्यात् ॥

शशिलेखा

यः पुनः क्षीणत्वादियुक्तः क्षतकासी, सः शर्करादिकं श्रृतक्षीरानुपानमद्यात् । स च क्षीणत्वादियुक्तः क्रव्यादां पिशिताशिनां मांसस्य निर्यूहं रसं घृतभृष्टं पिप्पलीक्षौद्राभ्यां युक्तं मांसशोणितवर्धनार्थं पिबेत् । न्यग्रोधादिभिः श्रृतात् क्षीराज्जातेन सर्पिषा सह शालीनामोदनं क्षतोरस्कत्वादियुक्तोऽद्यात् । तालमस्तकं तालप्रान्तम् । शेषाणि सर्वाणि प्रसिद्धानि ॥

वातपित्तार्दितेऽभ्यङ्गो गात्रभेदे घृतैर्मतः ॥ ९० ॥
तैलैश्चानिलरोगघ्नैः पीडिते मातरिश्वना ।
हृत्पार्श्वार्तिषु पानं स्याज्जीवनीयस्य सर्पिषः ॥ ९१ ॥
कुर्याद्वा वातरोगघ्नं पित्तरक्ताविरोधि यत् ।
यष्ट्याह्वनागबलयोः क्वाथे क्षीरसमे घृतम् ॥ ९२ ॥
पयस्यापिप्पलीवांशीकल्कैः सिद्धं क्षते हितम् ।

सर्वाङ्गसुन्दरी

**वातपित्तेत्यादि** ॥ वातपित्तपीडिते गात्रभेदे च सत्यभ्यङ्गो घृतैर्मतः । मातरिश्वना वातेन पीडिते सति तैलैर्वातरोगहरैरभ्यङ्गो मतः । चशब्दात् घृतैर-

पीति द्योतयति। हृत्पार्श्वपीडासु जीवनीयस्य सर्पिषः पानं स्यादिति। सम्भावनायां लिङ्। अथवा वातरोगघ्नं यत् पित्तरक्ताविरोधि, तत् कुर्यात्। यष्ट्याह्वयस्य नागबलायाश्च क्वाथे क्षीरतुल्ये पयस्यादिकल्कैः सिद्धं घृतं क्षते क्षतकासे हितम्॥

शशिलेखा

वातपित्ताभ्यामर्दिते पीडिते पुरुषे यो गात्रभेदस्तस्मिन् घृतैस्तैलैश्च वातहरद्रव्यसिद्धैरभ्यङ्गो मतः। मातरिश्वना वातेन पीडिते पुरुषे या हृदाद्यार्तयस्तासु जीवनीयद्रव्यसिद्धस्य सर्पिषः पानं स्यात्। अथवा यत् पित्तरक्ताविरोधि वातव्याधिहरं कर्म तत् कुर्यात्। घृतान्मधुयष्टीनागबलयोः क्वाथश्चतुर्गुणः। पयस्यादीनां कल्कः स्नेहाच्चतुर्थांशः। पयस्या क्षीरिणी। बांशी तुकाक्षीरी। एतत् घृतं क्षतकासे हितम्॥

जीवनीयो गणः शुण्ठी वरी वीरा पुनर्नवौ ॥ ९३ ॥

बला भार्ङ्गी स्वगुप्तर्धिशटी तामलकी कणा।
शृङ्गाटकं पयस्या च पञ्चमूलश्च यल्लघु ॥ ९४ ॥

द्राक्षाक्षोडादि च फलं मधुरस्निग्धबृंहणम्।
तैः पचेत् सर्पिषः प्रस्थं कर्षांशैः श्लक्ष्णकल्कितैः ॥ ९५ ॥

क्षीरधात्रीविदारीक्षुच्छागमांसरसान्वितम्।
प्रस्थार्धं मधुनः शीते शर्कराधतुलारजः ॥ ९६ ॥

पलार्धकं च मरिचत्वगेलापत्रकेसरम्।
विनीय चूर्णितं तस्माल्लिह्यान्मात्रां यथानलम् ॥ ९७ ॥

अमृतप्राशमित्येतन्नराणाममृतं घृतम्।
सुधामृतरसं प्राश्यं क्षीरमांसरसाशिना ॥ ९८ ॥

नष्टशुक्रक्षतक्षीणदुर्बलव्याधिकर्शितान्।
स्त्रीप्रसक्तान् कृशान् वर्णस्वरहीनांश्च वर्धयेत् ॥ ९९ ॥

कासहिध्माज्वरश्वासदाहतृष्णास्रपित्तनुत्।
पुत्रदं छर्दिमूर्छाहृद्योनिमूत्रामयापहम् ॥ १०० ॥



सर्वाङ्गसुन्दरी

जीवनीय इत्यादि ॥ जीवनीयो गणस्तथा शुण्ठ्यादयस्तैर्जीवनीयगणादिभिः कर्षांशैः सूक्ष्मचूर्णितैः क्षीरधात्र्यादिरसयुक्तं घृतस्य प्रस्थं द्वात्रिंशत्पलानि पचेत्। द्राक्षाक्षोळादीत्यत्रादिशब्देन नाळिकेरमोचादिपरिग्रहः। शीते कृते माक्षिकस्य षोडशपलानि शर्कराचूर्णपलानि पञ्चाशत्। मरिचादीनि द्विकार्षिकाणि चूर्णितानि प्रक्षिप्य तस्मान्मात्रां यथानलं लिह्यात्। इत्येतदमृतप्राशसंज्ञं घृतं नराणाममृततुल्यं महागुणत्वात्। यथा नागानां सुधा देवानाममृतम्। अत एवैतत् सुधामृतरसं प्राश्यं भोज्यं क्षीरमांसरसाशिना। एतच्च घृतं नष्टशुक्रादीन् वर्धयेत् बृंहयेत्। कासादिनुत्। पुत्रदं छर्द्यादिघ्नम्। अत्र च मधुरस्निग्धबृंहणानां द्राक्षादीनामपि यथालाभं कर्षप्रमाणमधिकं वा योज्यम्। यथा सामान्यपरिभाषोक्ता कल्कमात्रा परिपूर्णा स्यादिति ॥

शशिलेखा

एवं जीवनीयगणादिभिः कर्षांशैः घृतप्रस्थं पचेत्। जीवनीयगणादीनि लघुपञ्चमूलान्तानि द्रव्याणि पृथक् कर्षांशानि। द्राक्षादीनां लाभतः कर्षांशानां प्रयोगः। क्षीरधात्रीरसादीनां पृथक् पृथग्घृतसमत्वं विज्ञेयम्। तस्मिन् घृते शीते मधुनः प्रस्थार्धं षोडशपलानि। शर्कराचूर्णस्य च पञ्चाशत् पलानि। मरिचादिकं द्विकार्षिकं चूर्णितम्। विनीय प्रक्षिप्य। यथानलमित्यग्निबलापेक्षिणी प्रयोगे मात्रा। इत्येतच्च घृतं नाम्ना अमृतप्राशसंज्ञम्। सुधामृतरसमिति चेष्यते। एतद्धि नराणाममृतम्। एतच्च नरेण प्राश्यम्, यः क्षीरेण मांसरसेन वान्नमश्नाति तेन। एतद्धि नष्टशुक्रादीनां बृंहणं कासघ्नत्वादिगुणयुक्तञ्च ॥

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्यकर्तृणम्।
दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिरा ॥ १०१ ॥

पालिकानि पचेत्तेषां रसे क्षीरचतुर्गुणे।
कल्कैः स्वगुप्ताजीवन्तीमेदर्षभकजीवकैः ॥ १०२ ॥

शतावर्यर्धिमृद्वीकाशर्कराश्रावणीबिसैः।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्रोगशूलनुत् ॥ १०३ ॥

मूत्रकृच्छ्रप्रमेहार्शःकासशोषक्षयापहः।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः ॥ १०४ ॥



सर्वाङ्गसुन्दरी

श्वदंष्ट्रेत्यादि ॥ श्वदंष्ट्रादीनि पालिकानि पलप्रमाणानि। तेषां रसे क्षीरचतुर्गुणे स्वगुप्तादिभिः कल्कैः घृतात् प्रस्थः सिद्धः पक्वो वातपित्तहृद्रोग-शूलनुत्। मूत्रकृच्छ्रादिघ्नः। तथा धनुरादिखिन्नानां बलमांसदः॥

शशिलेखा

श्वदंष्ट्रादीनां क्वाथस्य चतुश्चत्वारिंशत्पलानि। क्षीरं क्वाथाच्चतुर्गुणम् स्वगुप्तादीनां कल्कः स्नेहाच्चतुर्थांशः। श्वदंष्ट्रो गोक्षुरकः। कर्तृणं भूतिकम्। पृथक्पर्णी पृश्निपर्णी। स्थिरा सालपर्णी॥

मधुकाष्टपलद्राक्षाप्रस्थक्वाथे पचेद्घृतम्।
पिप्पल्यष्टपले कल्के प्रस्थं सिद्धे च शीतले ॥ १०५ ॥
पृथगष्टपलं क्षौद्रशर्कराभ्यां विमिश्रयेत्।
समसक्तु क्षतक्षीणे रक्तगुल्मे च तद्धितम् ॥ १०६ ॥

सर्वाङ्गसुन्दरी

मधुकेति ॥ मधुयष्ट्या अष्टौ पलानि द्राक्षायाः षोडश एतत्क्वाथे पिप्पल्यष्टपलकल्के घृतप्रस्थं पचेत्। सिद्धे सुशीते सति घृते क्षौद्रशर्करयोः पृथगष्टपलं विमिश्रयेत्। तच्च घृतं समसक्तु क्षतक्षीणे रक्तगुल्मे च हितम्॥

शशिलेखा

मधुयष्ट्या अष्टौ पलानि शुष्कायाः द्राक्षायाः प्रस्थः षोडशपलानि क्वाथकल्पनया क्वाथयेत्। तस्मिन् क्वाथे षण्णवतिपलमाने घृतात् प्रस्थं पचेत्। तस्मिन् घृतप्रस्थे शीते च क्षौद्रस्याष्टपलं शर्करायाश्चाष्टपलं विमिश्रयेत्। अस्य च घृतस्य समैस्सक्तुभिरुपयोगः॥

धात्रीफलविदारीक्षुजीवनीयरसाद् घृतात्।
गव्याजयोश्च पयसोः प्रस्थं प्रस्थं विपाचयेत् ॥ १०७ ॥
सिद्धपूते सिताक्षौद्रं द्विप्रस्थं विनयेत्ततः।
यक्ष्मापस्मारपित्तासृक्कासमेहक्षतापहम् ॥ १०८ ॥
वयःस्थापनमायुष्यं मांसशुक्रबलप्रदम्।

सर्वाङ्गसुन्दरी

धात्रीति ॥ धात्र्यादिरसस्य सर्पिषश्च पृथक् प्रस्थं गव्याजयोः क्षीरयोः प्रस्थौ च विपाचयेत्। सिद्धपूते च ततस्तस्मिन् घृते शर्कराक्षौद्रयोः प्रस्थौ द्वौ विनयेत् क्षिपेत्। तत इति सप्तम्यर्थे तसिः। एतच्च घृतं यक्ष्मादिहरं तथा वयःस्थापनत्वादिगुणम् ॥

शशिलेखा

धात्रीफलरसादीनां सप्तानां पृथक्प्रस्थमानत्वं ततस्तस्मिन् प्रस्थसप्तके सिद्धे घृतपाके पूते वस्त्रस्रुते शर्करायाः प्रस्थं षोडशपलानि क्षौद्रस्य च प्रस्थं द्वात्रिंशत् पलानि विनयेत् क्षिपेत्। यक्ष्मादिहरमेतत् घृतमिति विज्ञेयम्। वयः-स्थापनं जरां नाशयेत्। आयुष्यादिगुणश्च॥

घृतं तु पित्तेऽभ्यधिके लिह्याद्वातेऽधिके पिबेत् ॥ १०९ ॥
लीढं निर्वापयेत् पित्तमल्पत्वाद्धन्ति नानलम्।
आक्रामत्यनिलं पीतमूष्माणं निरुणद्धि च ॥ ११० ॥

सर्वाङ्गसुन्दरी

घृतमित्यादि ॥ पित्तेऽभ्यधिके घृतं लिह्यात्। वातेऽधिके घृतं पिबेत्। लीढं तत् पित्तं निर्वापयेत् संशमयेत्। अनलमग्निं न हन्ति लीढं घृतम्। कुतः अल्पत्वात्। अत्रायं सद्भावार्थः किल पित्तेनाधिकेन द्रवयोगेनाग्नेर्मान्द्येनावश्यं भवितव्यम्। तथा च वक्ष्यति। "अग्नेर्निर्वापकं पित्तं रेकेण वमनेन वा हृत्वे"ति। तच्चाधिकं पित्तं लीढं घृतं शमयति। अल्पत्वाच्च हेतोरग्निं न हन्ति, मन्दस्याग्नेरधिकं मान्द्यं न जनयति। तथा पीतं सद्घृतमनिलमाक्रामति प्रसह्य जयति। ऊष्माणं जठराग्निं जाज्वल्यमानं रुणद्धि। आश्वेव स्थगयित्वा शमं किञ्चित् नयति ॥

शशिलेखा

पित्तेऽधिके सर्वं घृतमेव लिह्यात्। यतस्तल्लीढं स्थैर्याच्छैत्याच्च पित्तं निर्वापयेच्छमयेत्। अल्पत्वाच्चाग्नेर्नाशं न करोति। वाते त्वधिके घृतं विलीनं पिबेत्। यतः पीतं घृतं व्याप्तेरनिलमाक्रामति। तत्संयोगेन प्रसरन्तमूष्माणञ्च निरुणद्धि॥

क्षामक्षीणकृशाङ्गानामेतान्येव घृतानि तु।
त्वक्क्षीरीशर्करालाजचूर्णैः स्त्यानानि योजयेत् ॥ १११ ॥

सर्वाङ्गसुन्दरी

क्षामेत्यादि ॥ क्षामाणां क्षीणानां कृशाङ्गानाञ्च नराणामेतान्येव घृतानि पूर्वोक्तानि स्त्यानानि त्वक्क्षीरीशर्करालाजचूर्णैः सह योजयेत् ॥

शशिलेखा

एतान्येव चानन्तरोक्तानि घृतानि क्षामाद्यङ्गानां त्वक्क्षीर्यादिचूर्णैस्सह स्त्यानान्यविलीनानि योजयेत् ॥

सर्पिर्गुडान् समध्वंशान् कृत्वा दद्यात् पयोऽनु च ।
रेतो वीर्यं बलं पुष्टिं तैराशुतरमाप्नुयात् ॥ ११२ ॥

सर्वाङ्गसुन्दरी

सर्पिरिति ॥ सर्पिर्मिश्रान् गुडान् समध्वंशान् कृत्वा दद्यात् । शर्करायाः पलानि पञ्चाशत् । मधुनः पलानि षोडशैव देयानि । मुनिना ह्येवमुक्तम् । "त्वक्क्षीरीश्रावणीद्राक्षामूर्वर्षभकजीवकैः । वीरर्धिक्षीरिकाकोळीबृहतीकपिकच्छुभिः ॥ खर्जूरफलमेदाभिः क्षीरपिष्टैः पलोन्मितैः । धात्रीविदारीक्षुरसप्रस्थे प्रस्थं घृतात् पचेत् ॥ शर्करार्धतुलां शीते क्षौद्रार्धप्रस्थमेव च । क्षिप्त्वा सर्पिर्गुडान्कुर्याद्धिक्काश्वासज्वरापहान्" इति ॥ अन्वनन्तरं पयश्च दद्यात् । तैः सर्पिर्गुडै रेतोवीर्यादीन् शीघ्रतरं प्राप्नोति ॥

शशिलेखा

चूर्णसंयुक्तैः स्त्यानैश्च घृतैर्माक्षिकभागमिश्रैः सर्पिर्गुडान् घृतपिण्डकान् कृत्वा योजयेत् । अनु पश्चात् पयश्च दद्यात् पानाय । तैः सर्पिर्गुडैः पुरुषो रेतोवीर्यादिकमाशुतरमाप्नुयात् ॥

वीतत्वगस्थिकूश्माण्डतुलां स्विन्नां पुनः पचेत् ।
घट्टयन् सर्पिषः प्रस्थे क्षौद्रवर्णेऽत्र च क्षिपेत् ॥ ११३ ॥
खण्डाच्छतं कणाशुण्ठ्योर्द्विपलं जीरकादपि ।
जातधान्यमरिचं पृथगर्धपलांशकम् ॥ ११४ ॥
अवनारितशीले च दत्वा क्षौद्रं घृतार्धिकम् ।

खजेनामथ्य च स्थाप्यं तन्निहन्त्युपयोजितम् ॥ ११५ ॥

कासहिध्माज्वरश्वासरक्तपित्तक्षतक्षयान् ।
उरःसन्धानजननं मेधास्मृतिबलप्रदम् ॥ ११६ ॥

अश्विभ्यां विहितं हृद्यं कूश्माण्डकरसायनम् ।

सर्वाङ्गसुन्दरी

वीतत्वगित्यादि ॥ वीतान्यपनीतानि त्वगस्थीनि यस्मात् कूश्माण्डात् तस्य तुलां स्विन्नां सतीं पुनः सर्पिषः प्रस्थे घट्टयन् चालयन् पचेत्। अत्र च कूश्माण्डे माक्षिकवर्णे सति खण्डाच्छतं पलानां कणाशुण्ठ्योर्द्विपलं जीरकाच्च पलद्वयं त्रिजातादि प्रत्येकमर्धपलांशकं क्षिपेत्। अवतारिते शीते चास्मिन् क्षौद्रस्य षोडशपलानि दत्वा खजेन दर्व्या आमथ्य विलोड्य स्थाप्यम्। एवं ह्यस्य सम्यग्घृतादिसमायोगः स्यात्। उपयोजितं च तत् कासादीन् हन्ति। उरःसन्धानं करोति। मेधादिप्रदम्। अश्विभ्यां विहितं निर्दिष्टं कूश्माण्डकाख्यं रसायनम् ॥

शशिलेखा

वीतत्वगस्थीत्यादि सुबोधम्। कणाशुण्ठ्योर्मिश्रितयोर्द्विपलम्। पृथग्ग्रहणात्त्रिजातकस्य प्रतिद्रव्यं द्विकार्षिकत्वम्। घृताधिकत्वान्मधुनः षोडशपलानि ॥

पिबेन्नागबलामूलस्यार्धकर्षादिवर्धितम्[1] ॥ ११७ ॥

पलं क्षीरयुतं मासं क्षीरवृत्तिरनन्नभुक् ।
एषः प्रयोगः पुष्ट्यायुर्बलवर्णकरः परम् ॥ ११८ ॥

मण्डूकपर्ण्याः कल्पोऽयं यष्ट्या विश्वौषधस्य च ।

सर्वाङ्गसुन्दरी

पिबेदिति ॥ नागबलामूलस्य पलं क्षीरयुतं पिबेत्। किंभूतम्— अर्धकर्षादिवर्धितं मासं यावत्। किंभूतो नरः — क्षीरवर्तनोऽनन्नाशनः।

---

1 कर्षाभिवर्धितमित्यपि पाठः।

एष प्रयोगः सुष्टु पुष्ट्यादिकरः। अयमेव कल्पो मण्डूकपर्ण्या यष्ट्याः शुण्ठ्याश्च कार्यः ॥

शशिलेखा

अर्धकर्षादिवर्धितमिति। प्रथमेऽहन्यर्धकर्षः। द्वितीये कर्षः। तृतीये सार्धकर्षः। चतुर्थे द्वौ कर्षौ। पञ्चमेऽर्धोनत्रितयः। षष्ठे त्रयः। सप्तमेऽर्धोनचत्वारः। अष्टमे तु पलम्। शेषाणि द्वाविंशतिदिनानि पलम्। नागबलामूलवन्मण्डूकपर्ण्या अपि वृद्धिः। क्षीरमानं वृद्धिविषयकल्पम्। तद्वन्मधुयष्ट्याः। तद्वच्छृङ्गिबेरस्य। मण्डूकपर्णी ब्रह्मसुवर्चला ॥

पादशेषं जलद्रोणे पचेन्नागबलातुलाम् ॥ ११९ ॥
तेन क्वाथेन तुल्यांशं घृतं क्षीरञ्च साधयेत्।
पलार्धिकैश्चातिबलाबलायष्टीपुनर्नवैः ॥ १२० ॥
प्रपौण्डरीककाश्मर्यप्रियालकपिकच्छुभिः।
अश्वगन्धासिताभीरुमेदायुग्मत्रिकण्टकैः ॥ १२१ ॥
काकोलीक्षीरकाकोली[1]क्षीरशुक्लर्धिजीवकैः।
मृणालबिसखर्जूरशृङ्गाटककशेरुकैः ॥ १२२ ॥
एतन्नागबलासर्पिः पित्तरक्तक्षतक्षयान्।
जयेत् तृड्भ्रमदाहांश्च बलपुष्टिकरं परम् ॥ १२३ ॥
वर्ण्यमायुष्यमोजस्यं वलीपलितनाशनम्।
उपयुज्य च षण्मासान् वृद्धोऽपि तरुणायते ॥ १२४ ॥

सर्वाङ्गसुन्दरी

पादशेषमित्यादि ॥ नागबलायास्तुलां जलद्रोणे पादशेषं यथा भवति तथा पचेत्। तेन नागबलाक्वथेन, तुल्यांशं घृतं तथा क्षीरं पलार्धप्रमाणैरतिबलादिभिः कल्कैश्च साधयेत्। एतन्नागबलासर्पिः पित्तरक्तादीञ्जयेत्। तथा सुष्टु बलादिकरम्। तथा वर्णाय हितं आयुष्यमोजस्यं वलीपलितघ्नञ्च। तथा षण्मासानुपयुज्येदं घृतं वृद्धोऽपि तरुण इव आचरति ॥

1 "क्षीरशुक्लाद्विजीरकैः" इति पाठः सङ्ग्रहे।



शशिलेखा

पादशेषमित्यादिना नागबलासर्पिः सुबोधम् । क्षीरशुक्ला क्षीरविदारीत्युच्यते । "अन्या क्षीरविदारी स्यादिक्षुगन्धेक्षुवल्यपि । क्षीरवल्ली क्षीरकन्दा क्षीरवृक्षा पलाशिनी" इति पठन्ति ॥

दीप्तेऽग्नौ विधिरेष स्यान्मन्दे दीपनपाचनः ।
यक्ष्मोक्तः क्षतिनां शस्तो ग्राही शकृति तु द्रवे ॥ १२५ ॥

सर्वाङ्गसुन्दरी

दीप्तेऽग्नाविति ॥ दीप्ते समिद्धेऽग्नौ सत्येष विधिः स्यात् । मन्देऽग्नौ दीपनपाचनः यक्ष्मोक्तो राजयक्ष्मण्युक्तः क्षतिनां शस्त उपक्रमः । द्रवे तु शकृति ग्राही उपक्रमः ॥

शशिलेखा

एष विधिरनन्तरोक्तो बृंहणः क्षतक्षीणे दीप्तेऽग्नौ सति विधेयः । मन्दे त्वग्नौ दीपनपाचनो विधिर्भवति । यश्च विधी राजयक्ष्मण्युक्तः सोऽपि क्षतिनां शस्तः । यदा तु क्षतस्य विनाऽजीर्णादिकं शकृद्द्रवं भवति तदा ग्राही विधिः शस्तः ॥

दशमूलं स्वयंगुप्तां शंखपुष्पीं षटीं बलाम् ।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥ १२६ ॥
भार्ङ्गीं पुष्करमूलञ्च द्विपलांशान् यवाढकम् ।
हरीतकीशतं चैकं जलपञ्चाढके पचेत् ॥ १२७ ॥
यवस्वेदे कषायं तं पूतं तच्चाभयाशतम् ।
पचेद्गुडतुलां दत्त्वा कुडवं च पृथक् घृतात् ॥ १२८ ॥

---

1 अत्र हरीतक्याः द्विकर्षप्रमाणत्वमङ्गीक्रियते वृद्धवैद्यैः ।

तन्त्रान्तरेऽप्युक्तं— 'नवा स्निग्धा घना वृत्ता गुर्वी क्षिप्ता तथाम्भसि ।
निमज्जेद्या प्रशस्तत्वात् गुणकृत् सा प्रकीर्तिता ॥
नवादिगुणयुक्तत्वं तथैकत्वं द्विकर्षता ।
हरीतक्याः फले येन तेनैतच्छ्रेष्ठमुच्यते'' अन्यदपि—
"अभयैका प्रदातव्या, द्वावेव तु विभीतकौ ।
धात्रीफलानि चत्वारि, त्रिफलेयं प्रकीर्तिता" ॥ इति



तैलात् सपिप्पलीचूर्णात्सिद्धशीते च माक्षिकात् ।
लेहाद्द्वे चाभये नित्यमतः खादेद्रसायनात् ॥ १२९ ॥

तद्वलीपलितं हन्याद्वर्णायुर्बलवर्धनम् ।
पञ्चकासान् क्षयं श्वासं सहिध्मं विषमज्वरम् ॥ १३० ॥

मेहगुल्मग्रहण्यर्शोहृद्रोगारुचिपीनसान् ।
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम् ॥ १३१ ॥

सर्वाङ्गसुन्दरी

दशमूलेत्यादि ॥ दशमूलादिपुष्करमूलान्तं पृथग्द्विपलप्रमाणं यवाना-माढकं चतुःषष्टिपलानि। हरीतकीफलानामेकं शतम् । एतत् सर्वं जलस्य पञ्चाढके पचेत् । यवस्वेदे सति तं कषायं पूतं गालितं तच्च स्विन्नमभयाशतं गुडतुलां तथा घृततैलपिप्पलीचूर्णानां प्रत्येकं कुडुबं दत्वा पचेत् । सिद्धे शीते च लेहे माक्षिकात् कुडुबं दत्वाऽतो लेहाख्याद्रसायनात् सत्रिभागपलद्वयमात्रं द्वे च हरीतक्यौ नित्यं खादेत् । तच्च भुक्तं वलीपलितं हन्यात् । वर्णादिवर्धनं तथा पञ्चकासादीन् हन्ति। अगस्त्येन महर्षिणा निर्मितमेतद्रसायनं धन्यं श्रेष्ठम्। अत्र च तैलघृतमधूनां समांशानामप्यविरोधः पाकाच्छक्त्यन्तरोत्पत्तेः ॥

शशिलेखा

दशमूलेत्यादिनागस्त्यलेहः सुबोधम् । अत्र जलस्याढकमष्टाविंशत्यधिकं पलशतम् । घृततैलमाक्षिकाणां कुडुबान्यष्टपलानि । पिप्पलीचूर्णस्य कुडुबं चतुष्पलम् । हरीतकीफलानां क्वाथशल्कादुद्धृतानां विगतास्थीनां यथोक्तस्नेहभ्रष्टानां तेनैव सह गुडक्वाथप्रक्षेपः । वृद्धानां प्रायो लेहेषु च्यवनप्राशवद्व्यवहारः । रसायनं लेह एव । तदिति रसायनपरामर्शः ॥

दशमूलं बलां मूर्वां हरिद्रे पिप्पलीद्वयम् ।
पाठाश्वगन्धापामार्गस्वगुप्तातिविषामृताः ॥ १३२ ॥

बालबिल्वं त्रिवृद्दन्तीमूलं पत्रञ्च चित्रकात् ।
पयस्यां कुटजं हिंस्रां पुष्पं सारञ्च बीजकात् ॥ १३३ ॥

बोळस्थिरभल्लातविकङ्कतशतावरीः ।
पूतीकरञ्जशम्याकचद्रलेखासहाचरम् ॥ १३४ ॥



सौभञ्जनकनिम्बत्वगिक्षुरं च पलांशकम् ।
पथ्यासहस्रं सशतं यवानां चाढकद्वयम् ॥ १३५ ॥

पचेदष्टगुणे तोये यवस्वेदेऽवतारयेत् ।
पूते क्षिपेत्सपथ्ये च तत्र जीर्णगुडात्तुलाम् ॥ १३६ ॥

तैलाज्यधात्रीरसतः प्रस्थं प्रस्थं ततः पुनः ।
अधिश्रयेन्मृदावग्नौ दर्वीलेपेऽवतार्य च ॥ १३७ ॥

शीते प्रस्थद्वयं क्षौद्रात् पिप्पलीकुडुबं क्षिपेत् ।
चूर्णीकृतात्त्रिजाताच्च त्रिपलं निखनेत्ततः ॥ १३८ ॥

धान्ये पुराणकुम्भस्थं मासं खादेच्च पूर्ववत् ।
रसायनं वसिष्ठोक्तमेतत्पूर्वगुणाधिकम् ॥ १३९ ॥

स्वस्थानां निष्परीहारं सर्वर्तुषु च शस्यते ।

सर्वाङ्गसुन्दरी

**दशमूलमित्यादि** ॥ दशमूलादीक्षुरान्तं पलप्रमाणम् । बोळोऽलंबुषा (അടക്കാമണിയൻ) । स्थविरं शैलेयम् । चद्रलेखा वाकुची । हरीतकीनामेकादश शतानि । यवानामाढकौ द्वौ । अष्टगुणे जले पचेत् । यवस्वेदे सत्यवतारयेत् । तस्मिन् क्वाथे पूते पथ्यासहिते पुराणगुडात्तुलां तैलादीनां पृथक् पृथक् प्रस्थं क्षिपेत् । ततोनन्तरं पुनः पचेन्मृदावग्नौ । दर्वीलेपे सत्यवतार्य शीते सति क्षौद्रात् प्रस्थद्वयं पिप्पलीनां कुडुबं चतुष्पलं चूर्णीकृतात् त्रिजाताच्च त्रिपलं क्षिपेत् । ततोऽनन्तरं पुराणकुम्भस्थं घृतरूढभाण्डस्थं धान्यमध्ये मासं निखनेत् । मासादूर्ध्वं पूर्ववत् खादेत् । एतद्रसायनं वसिष्ठेन कथितं अगस्त्यलेहात् गुणैरधिकं स्वस्थानां निष्परीहारं सर्वेषु चर्तुष्विष्यते । तन्त्रकृद्भिरिति शेषः ॥

शशिलेखा

दशमूलबलादिकं वसिष्ठमुनिप्रोक्तं रसायनं सुबोधम् । दशमूलं पृथक्द्रव्यं पलांशिकम् । दन्त्या मूलम् । चित्रकस्य पत्रम् । पयस्या क्षीरिका । कुटजं वत्सकं हिंस्रा मांसी । बीजकमसनं । बोळस्थविरं बोळवृक्षः कुलहलमलंबुसा भूक-

1 'वृशाभयाः पलं विद्यात् विद्याद्दशपलं शतम् ।
पलं शतानां पथ्यायाः सहस्रमिति कल्पयेत्' ॥ इति तन्त्रान्तरे ।

द्रवः। शकदेशे मुण्डिकेति प्रसिद्धा। चन्द्रलेखा वाकुची। द्विचत्वारिंशदौषधपलानि। यवानामष्टाविंशत्यधिकं पलशतम्। हरीतकीफलानाञ्चैकादशशतानि। सर्वमेकीकृत्य तंतुलयापरिच्छिद्य ततोऽष्टगुणेन तोयेन पचेत्। पूतं शल्करहितं स्रुतत्वात्। पथ्याः शल्कादुद्धृत्यानस्थिमजिताः पूर्ववत् क्वाथे प्रक्षेप्याः ततः पक्वं धान्यराशौ निखनेत्। मासं धान्ये स्थितिः। पूर्वगुणा अगस्त्योक्ताः॥

पालिकं सैन्धवं शुण्ठी द्वे च सौवर्चलात् पले ॥ १४० ॥
कुडवांशानि वृक्षाम्लं डाडिमं पत्रमार्जकात्।
एकैकां मरिचाजाज्योर्धान्यकाद्द्वे चतुर्थिके ॥ १४१ ॥
शर्करायाः पलान्यत्र दश द्वे च प्रदापयेत्।
कृत्वा चूर्णमतो मात्रामन्नपानेषु दापयेत् ॥ १४२ ॥
रुच्यं तद्दीपनं बल्यं पार्श्वार्तिश्वासकासजित्।

**सर्वाङ्गसुन्दरी**

**पालिकमित्यादि** ॥ सैन्धवं लवणं पालिकं पलप्रमाणम्। शुण्ठी पलप्रमाणा। पालिकमिति पलं परिमाणमस्येति ठक्। पालिकं पालिकी चेति "नपुंसकमनपुंसकेनैकवच्चान्यतरस्यामि"त्येक शेषः। सौवर्चललवणाच्च द्वे पले। कुडवप्रमाणानि वृक्षाम्लादीनि। आर्जकं कुठेरकं तस्मात् पत्रम्। एकैकामेकामेकां मरिचाजाज्योश्चतुर्थिकां पलसंज्ञिकाम्। धान्यकात् द्वे चतुर्थिके। शर्करापलानि द्वादशात्र देयानि। तथा च मुनिः —"पालिकं सैन्धवं शुण्ठी"मित्यारभ्य याव"च्छर्करायाः पलान्यत्र दश द्वे च प्रदापयेत् कृत्वा चूर्णमतो मात्रा"मित्यादि। तस्मादत्राप्ययं ग्रन्थो निर्दिष्टो बोध्यः। प्रमादात्तु केचिन्न पठन्ति। अपि चात्रैवं वक्ति[1] रुच्यं तद्दीपनमित्यादि। शर्करामन्तरेण तु रुच्यत्वमस्य कथमिवोपपद्यते? तस्माद्युक्तोऽत्र शर्कराप्रयोग इति। एतच्चूर्णं कृत्वाऽतोऽस्माच्चूर्णान्मात्रां यथोचितामन्नपानेषु दापयेद्वैद्य इति शेषः। तच्चूर्णं रुच्यं दीपनं बल्यं पार्श्वार्त्यादिजित्॥

1 षाडवं चूर्णमाह — अत्र पलविंशतौ इति हेमाद्रिः।

शशिलेखा

पालिकमित्यादावार्जकस्य कुठेरकस्य पत्रम्। एकैकेति चतुर्थिकायाः पलपर्यायस्यापरामर्शः। धान्यकफलात् द्वे पले। अतश्चूर्णान्मात्रां स्तोकं प्रत्यहमन्नपानेषु दापयेत्। तच्चूर्णं रुच्यादिगुणम्।

एकां षोडशिकां धान्याद् द्वे द्वे चाजाजिदीप्यकात् ॥ १४३ ॥

ताभ्यां डाडिमवृक्षाम्ले[1] द्विर्द्विः सौवर्चलात् पले।
शुण्ठ्याः कर्षं दधित्थस्य मध्यात् पञ्च पलानि च ॥ १४४ ॥

तच्चूर्णं षोडशपलैः शर्करायाः विमिश्रयेत्।
षाडवोयं प्रदेयः स्यादन्नपानेषु पूर्ववत् ॥ १४५ ॥

विधिश्च यक्ष्मपित्तासृग्विहितः शस्यते क्षते।

सर्वाङ्गसुन्दरी

**एकामित्यादि** ॥ धान्यकादेकां षोडशिकां कर्षसंज्ञिकां अजाजीदीप्यकात् द्वे द्वे षोडशिके। ताभ्यामजाजीदीप्यकाभ्यां मिश्रिताभ्यां सकाशात् डाडिमवृक्षाम्ले द्विः द्विः प्रत्येकं चतस्रः षोडशिका इत्यर्थः। तथा सौवर्चलात् पले द्वे। शुण्ठ्याः कर्षं। दधित्थस्य मध्यान्मज्जतः पञ्च पलानि। तदेतच्चूर्णं शर्करायाः षोडशपलैर्विमिश्रयेत् संमेळयेत्। अयं षाडवः अनुपानेषु पूर्ववत् प्रदेयः स्यात्। अहर्थे कृत्यः। केचित्तु षोडशिका पलमित्याहुः। उरःक्षते चावस्थावशाद्यक्ष्मणि यो विहितो विधिः स हितः रक्तपित्ते विहितः विधिश्च शस्यते ॥

शशिलेखा

एकामित्यादौ षोडशिका कर्षः। अजाज्याः द्वौ कर्षौ। अजमोदस्य द्वौ कर्षौ। ताभ्यामित्यजाजीदीप्यकाभ्यां। डाडिमवृक्षाम्ले द्विः द्विः। तेन मिश्रिताभ्यामजाजीदीप्यकाभ्यां द्विगुणं डाडिमं तद्वत्तिन्त्रीणीकम्। एवमष्टौ कर्षा डाडिमस्याष्टौ तिन्त्रिणीकस्य। पलं सौवर्चलस्य। शुण्ठ्याः कर्षः। पञ्चपलानि दधित्थमज्जः। दधित्थं

---

1 द्विर्द्विः —द्विर्भूत्वा द्विः, प्रत्येकं चतुःपलमिते डाडिमवृक्षाम्ले।
षाडवः —षड्गसंयोगात् इति हेमाद्रिः ॥



कपित्थम् शर्करायाः षोडशपलानि । राजयक्ष्मचिकित्सितं रक्तपित्तचिकित्सितञ्च विकल्प्योरःक्षते योज्यम् ॥

निवृत्ते क्षतदोषे तु कफे वृद्ध उरः शिरः ॥ १४६ ॥
दाल्येते कासिनो यस्य स ना धूमानिमान् पिबेत् ।

सर्वाङ्गसुन्दरी

निवृत्त इति ॥ क्षतदोषे च निवृत्ते शान्ते सति कफे वृद्धे यस्य कासवतः पुंस उरःशिरश्चदाल्येते पाट्येते स कासी धूमानिमान् द्विमेदादीन् पिबेत् ॥

शशिलेखा

एवमनन्तरोक्तेन बृंहणेन क्रमेण क्षतदोषे निवृत्ते बृंहणेनैव कफे वृद्धे उरसि शिरसि च कफानुबन्धेन यस्य कासिनो महती रुग्भवति स ना पुरुषः इमान् वक्ष्यमाणान् धूमान् पिबेत् ॥

द्विमेदाद्विबलायष्टीकल्कैः क्षौमे सुभाविते[1] ॥ १४७ ॥
वर्तिं कृत्वा पिबेद्धूमं जीवनीयघृतानुपः ।
मनःशिलाबलासाजगन्धात्वक्क्षीरिनागरैः ॥ १४८ ॥
तद्वदेवाऽनुपानन्तु शर्करेक्षुगुडोदकम् ।
पिष्ट्वा मनःशिलां तुल्यामार्द्रया वटशुङ्गया ॥ १४९ ॥
ससर्पिष्कं पिबेद्धूमं तित्तिरिप्रतिभोजनः ।

सर्वाङ्गसुन्दरी

द्विमेदेत्यादि ॥ द्विमेदादिभिः कल्कैः क्षौमे सुभाविते वर्तिं कृत्वा धूमं पिबेत् । जीवनीयाख्यं घृतमनु पश्चात् पिबेत् । जीवनीयाख्यं जीवनीयपक्वम् । मनःशिलादिभिस्तद्वदेव द्विमेदादिभिर्यथा तथा धूमं पिबेत् । अनुशर्करोदकमिक्षुरसं गुडोदकं वा पिबेत् । उदकसादृश्यादिक्षुरसोऽपीक्षूदकशब्देन गृहीतः । मनःशिलामार्द्रया वटशुङ्गया तुल्यां पिष्ट्वा सह सर्पिषा धूमं सतित्तिरिप्रतिभोजनः पिबेत् ॥

---

1 सुभाविते पुनः पुनर्लिप्ते इति हेमाद्रिः ।

शशिलेखा

द्विमेदादिकल्कभावितक्षौमकृतया वर्त्या धूमः। तत्रानुपानं जीवनीयपक्वं घृतम्। मनःशिलादिभिः क्षौमवर्ती धूपेऽनुपानं शर्करासंस्कृतं जलम्। इक्षुणा क्षुण्णेन। पिष्ट्वेत्यादि सुबोधम्। एतद्धूमपस्य तित्तिरिरसेन भोजनम्। इति क्षतकासचिकित्सितम्॥

अधुना क्षयकासचिकित्सामाह—

क्षयजे बृंहणं पूर्वं कुर्यादग्नेश्च वर्धनम् ॥ १५० ॥
बहुदोषाय सस्नेहं मृदु दद्याद्विरेचनम्।
शम्याकेन[1] त्रिवृतया मृद्विकारसयुक्तया ॥ १५१ ॥
तिल्वकस्य कषायेण विदारीस्वरसेन च।
सर्पिः सिद्धं पिबेद्युक्त्या क्षीणदेहो विशोधनम् ॥ १५२ ॥

सर्वाङ्गसुन्दरी

क्षयज इत्यादि॥ क्षयजे कासे पूर्वोक्तं बृंहणं कुर्यादग्निसन्दीपनञ्च। बहुदोषाय प्रभूतदोषाय क्षतकासिने स्नेहेन सहितं मृदुविरेचनं दद्यात्। शाम्याकेन कर्णिकारेणाथवा त्रिवृतया द्राक्षारसयुक्तया तिल्वकस्य कषायेण विदारीस्वरसेन च सर्पिः सिद्धं युक्त्या देशकालादिवशेन क्षीणदेहो विशोधनं पिबेत्॥

शशिलेखा

क्षयज इत्यादिना क्षयकासनिश्चयः सुबोधम्। शम्याकेनेत्यादिना शोधनानि वृतानि। कदाचिच्छम्याकेन कदाचिद्द्राक्षारसयुक्तया त्रिवृतया। कदाचित्तिल्वकस्य कषायेण। कदाचिद्विदारीस्वरसेन। शम्याक आरग्वधः। तिल्वकः लोध्रम्॥

पित्ते कफे धातुषु च क्षीणेषु क्षयकासवान्।
घृतं कर्कटकीक्षीरद्विबलासाधितं पिबेत् ॥ १५३ ॥
विदारीभिः कदम्बैर्वा तालसस्यैश्च साधितम्।
घृतं पयश्च ....................

---

1 तदेव विरेचनत्रयमाह—शम्याककल्केन सिद्धं सर्पिरेकं, त्रिवृत्कल्कद्राक्षारसाभ्यां द्वितीयं, लोध्रक्वाथविदारीरसाभ्यां तृतीयं इति हेमाद्रिः।

सर्वाङ्गसुन्दरी

**पित्त इति।** पित्ते क्षीणे कफादिषु च क्षीणेषु क्षयकासी कर्कटक्यादिपक्वं घृतं पिबेत् ॥ अथवा विदारीभिः श्रृतं कदंबैर्वा पक्वं घृतं पिबेत्। विदारीभिरिति बहुवचनं क्षीरविदार्यादिव्यक्तिविशेषाणां ग्रहणार्थम्। एवं कदंबैरित्यत्रापि धाराकदंबादिग्रहणार्थम्। जातौ बहुवचनमित्यन्ये। तालसस्यैस्तालस्य बीजैस्तालफलैर्वा साधितं घृतं पयो वा पिबेत् ॥

शशिलेखा

अथवा पित्तादिषु क्षीणेषु क्षयकासवान् समैः कर्कटक्यादिभिः स्नेहपाकपरिभाषया घृतं साधितं पिबेत्। विदारीकन्दैर्वा साधितं घृतं कदम्बैर्वा घृतम्। तालबीजैः सिद्धं घृतं वा क्षीरं वा ॥

**................ मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे ॥ १५४ ॥**

**शूने सवेदने मेढ्रे पायौ सश्रोणिवङ्क्षणे।**
**घृतमण्डेन लघुना वान्वास्यो मिश्रकेण वा ॥ १५५ ॥**

सर्वाङ्गसुन्दरी

**मूत्रस्येति ॥** मूत्रस्य वैवर्ण्ये कृच्छ्रनिर्गमे च सति तथा मेढ्रे शूने सवेदने पायौ श्रोण्यां वंक्षणे चैवंविधे सति नरो लघुना घृतमण्डेनानुवास्य अनुवासनार्हः। लघुग्रहणं महिषादिगुरुतरघृतनिवृत्त्यै। अथवा मिश्रकेण "जीवन्तीं मदन"मित्यादिकल्पोक्तेनानुवास्यः ॥

शशिलेखा

क्षयकासे यत्र पुनर्मूत्रवैवर्ण्यादिकं भवति तत्र लघुना घृतमण्डेनानुवास्यः। पायौ सश्रोणिवंक्षणे शूने सवेदन इत्यनुवर्तते। मिश्रकं घृततैले ॥

**जाङ्गलैः प्रतिभुक्तस्य वर्तकाद्याः विलेशयाः।**
**क्रमशः प्रसहास्तद्वत् प्रयोज्याः पिशिताशिनः ॥ १५६ ॥**

---

1 मिश्रकेण वृद्धिचिकित्सितोक्तेन सुकुमाराख्येन "पचेत् पुनर्नवतुलां" इत्यादिना—इति हेमाद्रिः।

औष्ण्यात् प्रमाथिभावाच्च स्रोतोभ्यश्च्यावयन्ति ते ।
कफं शुद्धैश्च तैः पुष्टिं कुर्यात् सम्यग्वहन् रसः ॥ १५७ ॥

सर्वाङ्गसुन्दरी

जाङ्गलैरिति ॥ अनुवासनानन्तरं जाङ्गलैर्मांसैर्हरिणैणादिभिः तदभावात्तत्सदृशैरपि प्रतिभुक्तस्यानन्तरं वर्तकाद्याः प्रयोज्याः । वर्तकाद्यैः प्रतिभुक्तस्यानन्तरं तथैव विलेशयाः प्रयोज्याः । बिलेशयैः प्रतिभुक्तस्यानन्तरं तथैव पिशिताशिनःप्रसहा द्वीपिव्याघ्रादयः प्रयोज्याः । नानुवासितमात्रस्य जाङ्गलमांसादिप्रतिभुक्तस्यैव प्रसहाः पिशिताशिनश्च योज्याः अग्निमान्द्यभयात् । ते प्रसहाः प्रमाथिभावात्तदौष्ण्यात् कफोपलिप्तेभ्यः स्रोतोभ्यः कफं च्यावयन्ति । प्रमाथिद्रव्यलक्षणञ्च खरणादेगदितं यथा—"स्रोतांसि दोषलिप्तानि प्रमथ्य विवृणोति यत् । प्रविश्य सौक्ष्म्यात्तैक्ष्ण्याच्च तत् प्रमाथीति संज्ञित"मिति । तैश्च स्रोतोभिः शुद्धैः सम्यग्वहन् रसः पुष्टिं कुर्यात् ॥

शशिलेखा

अनुवासनानन्तरं प्रथमं जाङ्गलानां प्रयोगः । ततः क्रमेण वर्तकादीनां विलेशयानां प्रसहानां च पिशिताशिनाम् । ते हि वर्तकादयः कफमौष्ण्यात् प्रमाथित्वाच्च स्रोतोभ्यश्च्यावयन्ति । तैश्च स्रोतोभिः शुद्धैःसम्यग्वहन् रसः पुष्टिं कुर्यात् ॥

चविकात्रिफलाभार्ङ्गीदशमूलैः सचित्रकैः ।
कुलत्थपिप्पलीमूलपाठाकोलयवैर्जले ॥ १५८ ॥
शृतैर्नागरदुःस्पर्शापिप्पलीशटिपौष्करैः ।
[1]पिष्टैः कर्कटशृङ्ग्या च समैः सर्पिर्विपाचयेत् ॥ १५९ ॥
सिद्धेऽस्मिंश्चूर्णितौ क्षारौ द्वौ पञ्चलवणानि च ।
दत्त्वा युक्त्या पिबेन्मात्रां क्षयकासनिपीडितः ॥ १६० ॥
कासमर्दाभयामुस्तापाठाकट्फलनागरैः ।

1 समैः —नागरादिभिः पञ्चभिरेकया कर्कटकशृङ्ग्या, अन्यथा समैरिति व्यर्थं, प्रत्येकं समस्य परिभाषाप्राप्तत्वात् । इति हेमाद्रिः ।

पिप्पल्या कटुरोहिण्या काश्मर्या सुरसेन च ॥ १६१ ॥

अक्षमात्रैर्घृतप्रस्थं क्षीरद्राक्षारसाढके ।
पिबेच्छोषज्वरप्लीहसर्वकासहरं शिवम् ॥ १६२ ॥

सर्वाङ्गसुन्दरी

चविकेत्यादि ॥ चविकादिभिर्जले शृतैर्नागरादिभिः पिष्टैः समैः सर्पिर्विपाचयेत् । सिद्धेऽस्मिन् घृते चूर्णितौ क्षारौ द्वौ पञ्चलवणानि सैन्धवादीनि च दत्त्वा युक्त्या मात्रां प्रकृतस्य घृतस्य पिबेत् क्षयकासार्तः पुरुषः । कासमर्दादिभिरक्षप्रमाणैः क्षीरद्राक्षारसयोर्मिश्रितयोराढके घृतप्रस्थं पचेत् । शोषादिहरं शिवञ्चारोग्यकरम् ॥

शशिलेखा

चविकादीनां क्वाथः स्नेहाच्चतुर्गुणः । नागरादीनां च स्नेहाच्चतुर्थांशः । सिद्धे घृते क्षारयोर्लवणानां च दोषाद्यपेक्षं युक्त्या मात्रा । कासमर्दादीनां सुरसान्तानां कार्षिकत्वम् । क्षीरद्राक्षारसयोर्मिश्रितयोराढकः । शिवं मंगल्यम् ॥

वृषव्याघ्रीगुडूचीनां पत्रमूलफलाङ्कुरात् ।
रसकल्कैर्घृतं पक्वं हन्ति कासज्वरारुचीः ॥ १६३ ॥

सर्वाङ्गसुन्दरी

वृषव्याघ्रीति ॥ वृषादीनां पत्रमूलफलाङ्कुरात् रसकल्कैः पक्वं घृतं कासादीन् हन्ति ॥

शशिलेखा

वृषादीनां प्रत्येकं पलादीनां क्वाथे कल्के च तयोश्च स्नेहपाकपरिभाषा ॥

द्विगुणे दाडिमरसे सिद्धं वा व्योषसंयुतम् ।
पिबेदुपरि भक्तस्य यवक्षारयुतं नरः ॥ १६४ ॥

पिप्पलीगुडसिद्धं वा छागक्षीरयुतं घृतम् ।

सर्वाङ्गसुन्दरी

द्विगुण इत्यादि ।। अथवा डाडिमस्वरसे द्विगुणे व्योषकल्कसंयुतं सिद्धं घृतं भक्तस्याहारस्योपरि यवक्षारयुतं नरः पिबेत् । पिप्पलीगुडाभ्यां चतुर्गुणं घृतं घृताच्चतुर्गुणं जलं घृतसमं छागक्षीरमिति पक्वं पिबेत् ॥

शशिलेखा

डाडिमस्वरसो घृताद्द्विगुणस्तत्र व्योषं कल्के । यवक्षारेण संयुक्तं घृतं तथोक्तं भक्तस्योपरि भोजनान्ते पिप्पलीगुडाभ्यां सिद्धं सछागक्षीरेण पीयते ॥

एतान्यग्निविवृद्ध्यर्थं सर्पींषि क्षयकासिनाम् ॥ १६५ ॥

स्युर्दोषबद्धकण्ठोरःस्रोतसाश्च विशुद्धये ।
प्रस्थोन्मिते यवक्वाथे विंशतिं विजयाः पचेत् ॥ १६६ ॥

स्विन्ना मृदित्वा तास्तस्मिन्पुराणात् षट्पलं गुडात् ।
पिप्पल्याः द्विपलं कर्षं मनोह्वाया रसाञ्जनात् ॥ १६७ ॥

दत्वार्धाक्षं पचेत् भूयः स लेहः श्वासकासजित् ।

सर्वाङ्गसुन्दरी

एतानीति ।। एतानि पूर्वोक्तानि चव्यादिभिर्विपक्वानि घृतान्यग्नि-वर्धनानि क्षयकासिनां स्युः । दोषोपलिप्तकण्ठोरः स्रोतसां च विशुद्धये स्युः । यव-क्वाथे प्रस्थप्रमाणे हरीतकीर्विंशतिं पचेत् । स्विन्नास्ता हरीतकीस्तस्मिन् यवक्वाथे मृदित्वा पुराणात् गुडात् षट्पलं पिप्पल्या द्विपलं कर्षं मनश्शिलाया रसाञ्जनाद-र्द्धकर्षं तस्मिन् क्वाथे दत्वा पुनः पचेत् । स लेहः श्वासकासजित् ॥

शशिलेखा

एतानीति चविकाद्यादीनि प्रत्यवमृश्यन्ते । सुबोधम् ॥

श्वाविधां सूचयो दग्धाः सघृतक्षौद्रशर्कराः ॥ १६८ ॥

श्वासकासहरा बर्हिपादौ वा मधुसर्पिषा ।
एरण्डपत्रक्षारं वा व्योषतैलगुडान्वितम् ॥ १६९ ॥

लेहयेत् क्षारमेवं वा सुरसैरण्डपत्रजम् ।
लिह्यात् त्र्यूषणचूर्णं वा पुराणगुडसर्पिषा ॥ १७० ॥

पञ्चकं त्रिफला व्योषं विडङ्गं देवदारु च ।
बला रास्ना च तच्चूर्णं समस्तसमशर्करम् ॥ १७१ ॥

खादेन्मधुघृताभ्यां वा लिह्यात् कासहरं परम् ।
तद्वन्मरिचचूर्णं वा सघृतक्षौद्रशर्करम् ॥ १७२ ॥

सर्वाङ्गसुन्दरी

श्वाविदित्यादि ॥ श्वाविधां संबन्धिन्यः सूचयो दग्धा घृतक्षौद्रशर्करान्विताः श्वासकासहराः । बर्हिणो मयूरस्य वा पादौ दग्धौ मधुसर्पिषा सह श्वासकासहरौ । अथवा एरण्डपत्रस्य क्षारं व्योषतैलगुडयुतं लेहयेत् । एवं पूर्वोक्तेन प्रकारेण सुरसैरण्डपत्रजं क्षारं व्योषतैलगुडान्वितं लेहयेत् । अथवा त्र्यूषणचूर्णं पुराणगुडसर्पिषा लिह्यात् । पञ्चकादीनां चूर्णं समस्तसमशर्करम् । पञ्चकादीनां चूर्णमेकतः । एकतः शर्कराचूर्णम् । तदुभयं संयोज्य खादेत् भक्षयेत् । अथवा समशर्करमेव मधुघृताभ्यां मिश्रयित्वा लिह्यात् । तथैव मरिचचूर्णं घृतक्षौद्रशर्करायुतं खादेद्वा लिह्यात् ॥

शशिलेखा

श्वाविङ्कां प्राणिनां सूचयो देहे जायन्ते बर्हिपादौ वा दग्धाविति सम्बन्धः । सुबोधम् । पञ्चकादीनां चूर्णान्येकतः । शर्करा चैकतः । अथवा सशर्करमेव मधुघृताभ्यां लिह्यात् । सुबोधम् ॥

पथ्याशुण्ठीघनगुडैर्गुलिकां धारयेन्मुखे ।
सर्वेषु श्वासकासेषु केवलं वा विभीतकम् ॥ १७३ ॥

[1]पत्रकल्कं घृते भृष्टं तिल्वकस्य सशर्करम् ।
पेया वोत्कारिका छर्दितृट्कासामातिसारनुत् ॥ १७४ ॥

---

1 തില്വകം=പാച്ചോററി.

"कल्के तिल्वकपत्राणां घृतभृष्टे सशर्करे पेयोत्कार्यथवा इति" सङ्ग्रहे ।

सर्वाङ्गसुन्दरी

पथ्येत्यादि ॥ पथ्याशुण्ठीघनगुडैर्गुलिकां मुखे धारयेत् सर्वेष्वेव श्वासकासेषु । —केवलं वा विभीतकं मुखे धारयेदिति योज्यम् । पत्रकल्कं तिल्वकस्य घृते भृष्टं सशर्करं छर्यादिजित् । पेया वा तिल्वकपत्रस्य कल्के सिद्धा तद्वत् । अथवोत्कारिका तिल्वकपत्रकल्ककृता छर्यादिजित् ॥

शशिलेखा

पथ्येत्यादि सुबोधम् । घृतेन भृष्टं सशर्करं तिल्वकस्य पत्रं कल्कं च तेन संभावितेनान्नेन पेया वा उत्कारिका वा कार्या । उत्कारिका स्विन्नपिण्डी ॥

कण्टकारीरसे सिद्धो मुद्गयूषः सुसंस्कृतः ।
सगौरामलकः साम्लः सर्वकासभिषग्जितम् ॥ १७५ ॥
वातघ्नौषधनिष्क्वाथे क्षीरं यूषान् रसानपि ।
वैष्किरान् प्रातुदान् बैलान् दापयेत् क्षयकासिने ॥ १७६ ॥

सर्वाङ्गसुन्दरी

कण्टकारीरस इत्यादि ॥ कण्टकार्याःक्वाथे साधितो मुद्गयूषः सुसंस्कृतो हिंगुसैन्धवादिना शोभनं कृत्वा संस्कृतः । सह गौरामलकैर्वर्तत इति सगौरामलकः आर्द्रामलकयुक्तः । तथा सहाम्लैर्दाडिमादिभिर्वर्तत इति साम्लः । सर्वकासेषु भिषग्जितमौषधम् । वातघ्नौषधानां दशमूलादीनां निष्क्वाथे सिद्धं क्षीरमथवा यूषान् रसांश्च विष्किरमांसजान् प्रतुदजान् वा । तथा बिलेषु भवा बैलाः प्राणिनस्तेषां रसान् क्षयकासिने वैद्यो दापयेत् ॥

शशिलेखा

कण्टकारीत्यादि सुबोधम् । क्षयकासे क्षीरादीन् वैष्किरादींश्च रसान् वातघ्नानामौषधानां निष्क्वाथे सिद्धान् दद्यात् । वातघ्नानि शोधनादिगणसङ्ग्रहोक्तानि भद्रदार्वादीनि ॥

क्षतकासे च ये धूमाः सानुपाना निदर्शिताः ।
क्षयकासेऽपि ते योज्या वक्ष्यते यच्च यक्ष्मणि ॥ १७७ ॥
बृंहणं दीपनं चाग्नेः स्रोतसां च विशोधनम् ।
व्यत्यासात् क्षयकासिभ्यो बल्यं सर्वं प्रशस्यते ॥ १७८ ॥

सर्वाङ्गसुन्दरी

**क्षतकास इत्यादि ।।** क्षतकासे च ये धूमा द्विमेदेत्यादयः सानुपाना उक्तास्ते क्षयकासेऽपि योज्याः । यच्च यक्ष्मणि वक्ष्यते बृंहणमग्निदीपनं स्रोतोविशोधनं तच्च क्षयकासे योज्यम् । तथा क्षयकासिभ्यो व्यत्यासेन सर्वं चिकित्सितं बल्यं प्रशस्यते ।।

शशिलेखा

क्षतकास इत्यादि सुबोधम् । बृंहणादिकं यत्किञ्चिद्राजयक्ष्मणि वक्ष्यते तत्सर्वमत्रापि हितम् । तच्च बृंहणादि व्यत्यासात् पर्यायेण सर्वं बल्यं प्रशस्यते नाबल्यम् ।।

**सन्निपातोद्भवो घोरः क्षयकासो यतस्ततः ।**
**यथादोषबलं तस्य सन्निपातहितं हितम्** ।। १७९ ।।

सर्वाङ्गसुन्दरी

**सन्निपातोद्भव इति ।।** सन्निपातोद्भवः क्षयकासो घोरो दारुणो यतो भवति तस्माद्यथादोषबलं तस्य यत् सन्निपाते हितं तदत्र हितमिति ।।

शशिलेखा

सन्निपातोद्भव इत्यादि सुबोधम् । यथादोषबलमिति दोषबलापेक्षया वातप्राधान्येन पित्तप्राधान्येन कफप्राधान्येन वा सन्निपातहितं हितमित्यर्थः ।।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दर्याख्यायां श्रीमदिन्दुविरचितशशिलेखाव्याख्यासमेतायां कासचिकित्सितं नाम तृतीयोऽध्यायः ।।





# चतुर्थोऽध्यायः

कासचिकित्सानन्तरं श्वासहिध्माचिकित्सितं व्याख्यायते । संबन्धोऽत्र निदान एवोक्तः ॥

अथाऽतः श्वासहिध्माचिकित्सितं नामाध्यायं व्याख्यास्यामः ॥
इति ह स्माहुरात्रेयादयो महर्षयः ॥

श्वासहिध्मा यतस्तुल्यहेत्वाद्याः, साधनं ततः ।
तुल्यमेव..................................

सर्वाङ्गसुन्दरी

श्वासहिध्मेत्यादि ॥ यस्मात् श्वासहिध्मास्तुल्यहेत्वाद्याः । आदिग्रहणात् प्राग्रूपादयो गृह्यन्ते । निदाने ह्युक्तं "श्वासैकहेतुप्राग्रूपसंख्याप्रकृतिसंश्रया" इति । ततस्तस्माद्धेतोः साधनं चिकित्सितं श्वासहिध्मयोस्तुल्यमेव विहितम् ॥

शशिलेखा

क्रमप्राप्तस्य श्वासस्य तदेकयोगक्षेमाया हिध्मायाश्च चिकित्सितप्रदर्शनार्थमध्यायारम्भ — श्वासहिध्मा इत्यादि । निदानस्थानप्रदर्शितप्रकारेण श्वासे हिध्मायां च यतो हेत्वादिकं समानमतः साधनमपि समानमेव वेदितव्यम् ॥

..............तदार्तश्च पूर्वं स्वेदैरुपाचरेत् ॥ १ ॥
स्निग्धैर्लवणतैलाक्तं,तैः खेषु ग्रथितः कफः ।
सुलीनोऽपि विलीनोऽस्य कोष्ठं प्राप्तः सुनिर्हरः ॥ २ ॥
स्रोतसां स्यान्मृदुत्वञ्च मारुतस्यानुलोमता ।

सर्वाङ्गसुन्दरी

तदार्तमिति ॥ तदार्तं श्वासहिध्मातुरं पूर्वमुपक्रमेभ्यः सर्वेभ्योऽपि प्राक् स्वेदैरुपाचरेत् । किम्भूतैः? स्निग्धैर्न रूक्षैर्वातकोपभयात् । किम्भूतम् । लवणान्विनते

तैलेनाभ्यक्तम् । किमेवं सति स्यादित्याह । तैः स्वेदैः खेषु स्रोतस्सु अस्य श्वासहिध्मावतो वातात् ग्रथितः पिण्डितः कफः सुलीनोऽत्यतिशयेन श्लिष्टोऽन्तर्भूतोऽनयेतिकर्तव्यतया विलीनोऽस्य कोष्ठं प्राप्तः सुनिर्हरः स्यात् । सुखेन निर्हर्तुं शक्यते । तथा स्रोतसां वायुस्तम्भानां मृदुत्वं च स्यात् । मारुतस्यानुलोमता स्वमार्गगामित्वं स्यात् ॥

शशिलेखा

तदार्तमित्युभयस्य परिग्रहः । स्निग्धैरिति, स्निग्धद्रव्यकृतैः स्वेदैः । तैरिति स्वेदैर्विलीनः कफः कोष्ठं प्राप्तः सुनिर्हरो भवेत् । स्रोतोमृदुत्वादिकश्च भवेत् ॥

स्विन्नश्च भोजयेदन्नं स्निग्धमानूपजै रसैः ॥ ३ ॥

दध्युत्तरेण वा, दद्यात्ततोऽस्मै वमनं मृदु ।
विशेषात् कासवमथुहृद्ग्रहस्वरसादिने ॥ ४ ॥
पिप्पलीसैन्धवक्षौद्रयुक्तं वाताविरोधि यत् ।

सर्वाङ्गसुन्दरी

स्विन्नमित्यादि ॥ स्विन्नञ्च सन्तमातुरं स्निग्धमन्नं शाल्यादिकं न रूक्षं यवादिकमानूपजैः सूकरादिमांसजैः रसैः सह भोजयेत् । अथवा स्वेदानन्तरमस्मै श्वासहिध्मावते दध्युत्तरेण दधिसरेण वमनं मृदु दद्यात् । विशेषेण कासादिमते वमनं दद्यात् । तच्च वमनं पिप्पलीसैन्धवक्षौद्रयुक्तं वाताविरोधि वातं न करोति यत्तद्दद्यात् ॥

शशिलेखा

दध्युत्तरेण वान्नं भोजयेदिति संबन्धः । अस्मा इति श्वासहिध्मार्ताय । कासादियुक्ताय विशेषेण वमनं दद्यात् । पिप्पलीत्यादिवमनविशेषणम् ॥

निर्हृते सुखमाप्नोति स कफे दुष्टविग्रहे ॥ ५ ॥

स्रोतस्सु च विशुद्धेषु चरत्यविहतोऽनिलः ।

सर्वाङ्गसुन्दरी

निर्हृत इति ॥ निर्हृते कफे सः श्वासहिध्मावान् सुखमश्नुते । रुङ्निवृत्तेः । किंभूते कफे? दुष्टो विग्रहः शरीरं यस्य तस्मिन् । तथा स्रोतस्सु विशुद्धेषूपलेपादिरहितेषु वायुरविहतो न केनचिद्रुद्धः स्रोतस्सु चरति ॥

शशिलेखा

स इत्यनन्तरोक्तो हिध्माश्वासवान् । अविहतोऽनावृतमार्गः ॥

[1]ध्मानोदावर्ततमके मातुलुङ्गाम्लवेतसैः ॥ ६ ॥
हिङ्गुपीलुबिडैर्युक्तमन्नं स्यादनुलोमनम् ।
ससैन्धवं फलाम्लं वा कोष्णं दद्याद्विरेचनम् ॥ ७ ॥

सर्वाङ्गसुन्दरी

ध्मानमिति ॥ ध्मानमानाहः । उदावर्तः शकृतादीनामप्रवृत्तिः । तमकः श्वासविशेषः । ध्मानं चोदावर्तश्च तमकश्च ध्मानोदावर्ततमकम्, तस्मिन् प्रकृतत्वात् तथाविधे हिध्माश्वासवति । मातुलुङ्गाद्यैस्तथा हिङ्गुपीलुबिडैर्युक्तमन्नमनुलोमनं स्यात् । अथवाऽस्यामवस्थायां सैन्धवेन सह फलाम्लमम्लफलेन वातानुलोमनेन बीजपूरादिनाम्लमम्लीकृतं कोष्णमीषदुष्णं विरेचनं दद्यात् । स्रोतःशुध्यर्थम् ॥

शशिलेखा

ध्मानमाध्मानम् । सैन्धवेत्यादि विरेचनविशेषणम् ॥

किमेवं क्रियत इत्याह—

एते हि कफसंरुद्धगतिप्राणप्रकोपजाः ।
तस्मात्तन्मार्गशुध्यर्थमूर्ध्वाधः शोधनं हितम् ॥ ८ ॥
उदीर्यते भृशतरं मार्गरोधाद्वहज्जलम् ।
यथाऽनिलस्तथा तस्य मार्गमस्माद्विशोधयेत् ॥ ९ ॥

---

1 योगरत्ने चोक्तं — "हिङ्ग्वम्लवेतसव्योषसौवर्चलफलत्रिकम् ।
तुल्यं त्रिवृद्द्विगुणितं तैः सर्वैः शर्करासमा ॥
श्वासनं श्वासहिक्काघ्नं पिबेत्तद्भक्षयेदथ" इति ।





सर्वाङ्गसुन्दरी

**एत इति ॥** यस्मादेते हिध्माश्वासाः। कफेन संरुद्धा गतिर्यस्य स एवं, कफसंरुद्धगतिश्चासौ प्राणश्च तस्य प्रकोपस्तेन जाताः। तस्माद्धेतोस्तन्मार्गशुध्यर्थं तस्य प्राणस्य वायोर्मार्गशुद्धिनिमित्तमूर्ध्वमधश्च शोधनं हितम्। एतच्च दृष्टान्तद्वारेण दृढयति— उदीर्यत इत्यादि। यथा मार्गस्य रोधात् जलं वहत् भृशतरं सुतरामुदीर्यते वृद्धिं याति तथाऽनिलः स्वभावतो वहन्मार्गरोधान्मार्गस्यावरणात् भृशतरमुदीर्यते। तस्य वायोर्मार्गमस्माद्यथोक्तात् कारणाद्विशोधयेत् ॥

शशिलेखा

एते श्वासहिध्माश्च कफेन संरुद्धा गतिर्यस्य प्राणाख्यस्य वायोस्तत्प्रकोपाज्जायन्त इत्यतो मार्गविशुद्धिसम्पादनार्थमूर्ध्वाधःशोधनं वमनं विरेचनञ्च हितम्। जलरोधदृष्टान्तः सुबोधः ॥

अशान्तौ कृतसंशुद्धेर्धूमैर्लीनं मलं हरेत्।
हरिद्रापत्रमेरण्डमूलं लाक्षां मनःशिलाम् ॥ १० ॥

सदेवदार्वलं मांसीं पिष्ट्वा वर्तिं प्रकल्पयेत्।
तां घृताक्तां पिबेद्धूमं यवान्वा घृतसंयुतान् ॥ ११ ॥

मधूच्छिष्टं सर्जरसं घृतं वा गुरुवागरु।
चन्दनं वा तथा शृङ्गं वालान्वा स्नाव वा गवाम् ॥ १२ ॥

ऋश्यगोधाकुरङ्गैणचर्म्मशृङ्गखुराणि वा।
गुल्गुलुं वा मनोह्वां वा शालनिर्यासमेव वा ॥ १३ ॥

सल्लकीं गुल्गुलुं लोहं पद्मकं च घृताप्लुतम्।

सर्वाङ्गसुन्दरी

**अशान्तावित्यादि ॥** पूर्वस्यां क्रियायां सत्यामप्यशमे सति कृतसंशुद्धेः श्वासहिध्मार्तस्य लीनं सूक्ष्मस्रोतःश्लिष्टं मलं कफाख्यं धूमैर्वक्ष्यमाणैर्हरेत्। हरिद्रादीनि पिष्ट्वा जलेन वर्तिं प्रकल्पयेत्। तां वर्तिं घृताक्तां कृत्वा धूमं पिबेत्, सामर्थ्यादग्निप्लुष्टाम्। अथवा यवान् घृतान्वितान् [कृत्वा] धूमं पिबेत्। मधूच्छिष्टं सिक्थकं सर्जरसं घृतं वा एकीकृत्य धूमं पिबेत्। अथवा गुरु श्रेष्ठमगरु

कृष्णागरु धूमं पिबेत् । अथवा चन्दनम् । अथवा गवां शृङ्गम् । वालान् रोमाणि स्नात्र स्नायु वा गवामेव धूमं पिबेत् । अथवा ऋश्यादीनां चर्मादीनि तानि यथा योगं धूमं पिबेत् । खुरशब्दस्यार्धर्चादित्वान्नपुंसकत्वम् । गुल्गुलुं वाथवा मनश्शिलां सालनिर्यासं वा धूमं पिबेत् । सल्लक्यादि घृताप्लुतं वा ॥

शशिलेखा

कृतसंशुद्धेरपि दोषस्याशान्तौ । सुबोधम् । ऋश्यादीनां यानि चर्मादीनि तानि च पृथग्धूमः । ऋश्यो मृगभेदः । सल्लक्यादिकं मिश्रीभूतं घृताप्लुतं धूमः । सल्लकी सुरभिः । "सल्लकी सुरभिर्मोचा महेरुण्यश्वमूत्रिका ।" लोहमगरु ॥

अवश्यं स्वेदनीयानामस्वेद्यानामपि क्षणम् ॥ १४ ॥

स्वेदयेत्ससिताक्षीरसुखोष्णस्नेहसेचनैः ।
उत्कारिकोपनाहैश्च स्वेदाध्यायोक्तभेषजैः ॥ १५ ॥

उरः कण्ठश्च मृदुभिः, सामे त्वामविधिं चरेत् ।
अतियोगोद्धतं वातं दृष्ट्वा पवननाशनैः ॥ १६ ॥

स्निग्धै रसाद्यैर्नात्युष्णैरभ्यङ्गैश्च शमं नयेत् ।

सर्वाङ्गसुन्दरी

अवश्यमित्यादि ॥ अवश्यं स्वेदनीयानां तथाऽस्वेदनीयानामपि क्षणमुरः कण्ठश्च मृदुभिः स्वेदैः स्वेदयेत् । कैः सशर्कराक्षीरैः सुखोष्णस्नेहसेचनैः । तथा-स्वेदाध्याये यान्युक्तानि द्रव्याणि तत्कृतैरुत्कारिकोपनाहैश्च स्वेदयेत् । सामे तु श्वासहिध्मावति आमविधिं लङ्घनपाचनादिकं चरेन्निरामीकरणाय । अथवा शोधनाद्यतियोगादुद्धतं वातं दृष्ट्वा पवननाशनैः स्निग्धै रसाद्यैर्मांसरसघृतादिभिराहा-रैस्तथा किञ्चिदुष्णैरभ्यङ्गैश्च शमं नयेत् ॥

---

1 स्वेद्यानां श्वासिनामुरः कण्ठश्चावश्यं निर्भयं स्वेदयेत् । अस्वेद्यानाञ्च सभयम् । यद्यपि न सहते तथाऽपि क्षणमेकं स्वेदयेत् । स्नेहं ससिताक्षीरसुखोष्णैः कुर्यात् । तेन सिञ्चेत् । इति हेमाद्रिः ।

शशिलेखा

श्वासहिध्मापेक्षयाऽवश्यं स्वेदनीयास्तेषां अतिस्थूलरूक्षादित्वेनाऽस्वेद्यानामपि उरः कण्ठं च क्षणं मृदुभिः स्वेदैः स्वेदयेत्। कैरित्याह। ससितेत्यादि। उत्कारिका पिष्टस्विन्नपिण्डी। उपनाहः पिष्टबन्धः। सामे तु पुरुषे हिध्माश्वासयोरामविधिं लङ्घनपाचनादिकं चरेत्। शोधनादीनामपतर्पणानामतियोगेन वातमुद्धतं प्रवृद्धं दृष्ट्वा तं वातनाशनद्रव्यसिद्धैः स्निग्धैश्च मांसरसादिभिः शमयेत् ॥

अनुत्क्लिष्टकफास्विन्नदुर्बलानां हि शोधनात् ॥ १७ ॥
वायुर्लब्धास्पदो मर्म संशोष्याशु हरेदसून्।
कषायलेहस्नेहाद्यैस्तेषां संशमयेदतः ॥ १८ ॥

सर्वाङ्गसुन्दरी

अनुत्क्लिष्ट इत्यादि ॥ हि यस्मादनुत्क्लिष्टकफानामस्विन्नानां दुर्बलानाञ्च शोधनाद्धेतोः पवनो लब्धास्पदः सन्नन्य थानाश्रयवशादासादितसामर्थ्योऽत एव शोषणस्वभावत्वान्मर्म हृदयाख्यं संशोष्य शीघ्रमसून् प्राणान् हरेत्। तस्मादेवंविधान् हिध्माश्वासवतो न शोधयेत्। अतोऽन्यथाभूतांश्च शोधयेदित्यर्थादुक्तं भवति। तथा च तेषां संशोधनादारोग्यं सम्पद्यते। अनुत्क्लिष्टकफादीनां तर्हि किं कुर्यादित्याह—यतो यस्मात्ते संशोधनायोग्यास्तस्मात्तेषां कषायादिभिः संशमयेत् श्वासहिध्मा इति शेषः ॥

शशिलेखा

अनन्तरोक्तञ्च शोधनं कर्म अनुत्क्लिष्टकफादीनां न योज्यं यतस्तेषां शोधनेन वायुर्लब्धास्पदो मर्म हृदयाख्यं संशोष्याशु प्राणान् हरेत्। अतोहेतोस्तेषामनुत्क्लिष्टकफादीनां कषायादिभिर्हिध्माश्वासान् शमयेत् ॥

क्षीणक्षतातिसारासृक्पित्तदाहानुबन्धजान्।
मधुरस्निग्धशीताद्यैर्हिध्माश्वासानुपाचरेत् ॥ १९ ॥

सर्वाङ्गसुन्दरी

क्षीण इत्यादि ॥ क्षीणक्षतजानतीसारासृक्पित्तदाहानुबन्धजांश्च हिध्माश्वासान् मधुरादिभिरुपक्रमेत् ॥

शशिलेखा

क्षीणजान् क्षतजानतिसाराद्यनुबन्धजांश्च हिध्माश्वासान् मधुराद्यैर्बृंहणैरुपक्रमैरुपाचरेत् ॥

कुलत्थदशमूलानां क्वाथे स्युर्जाङ्गला रसाः ।
यूषाश्च शिग्रुवार्ताककासघ्नवृषमूलकैः ॥ २० ॥
पल्लवैर्निम्बकुलकबृहतीमातुलुङ्गजैः ।
व्याघ्रीदुरालभाशृङ्गीबिल्वमध्यत्रिकण्टकैः ॥ २१ ॥
सामृताग्निकुलत्थैश्च यूषः स्यात् क्वथितैर्जले ।
तद्वद्रास्नाबृहत्यादिबलामुद्गैः सचित्रकैः ॥ २२ ॥

सर्वाङ्गसुन्दरी

**कुलत्थ इत्यादि ॥** कुलत्थदशमूलानां क्वाथे जाङ्गलजा रसा स्युः । तेषामेव क्वाथे यूषाश्च स्युः । शिग्र्वादिभिश्च जले क्वथितैर्यूषः स्यात् । तथैव रास्नादिभिर्यूषः स्यात् ॥

शशिलेखा

कुलत्थदशमूलानां पृथक् द्रव्याणां मिश्रीभूतानाञ्च क्वाथे रसाः यूषाश्च शिग्र्वादिभिर्मातुलुङ्गपल्लवान्तैः स्युरिति सम्बन्धः । कासघ्नः कासमर्दकः । वृषो वाशा । व्याघ्र्यादिभिर्जले क्वथितैरेको यूषः स्यात् । अग्निश्चित्रकः । द्वितीयो यूषो रास्नादिभिः । बृहत्यादिशब्देन ह्रस्वपञ्चमूलं गृह्यते ॥

पेया च चित्रकाजाजीशृङ्गीसौवर्चलैः कृता ।
दशमूलेन वा कासश्वासहिध्मारुजापहा ॥ २३ ॥

सर्वाङ्गसुन्दरी

**पेयेत्यादि ॥** पेया च चित्रकादिभिर्हिता । अथवा दशमूलेन कृता सा च कासादिहरा ॥

शशिलेखा

एका पेया चित्रकादिभिः । द्वितीया दशमूलेन ॥



दशमूलषडीरास्नाभार्ङ्गीबिल्वर्धिपुष्करैः ।
कुलीरशृङ्गीचपलातामलक्यमृतौषधैः ॥ २४ ॥
पिबेत् कषायं जीर्णेऽस्मिन् पेयां तैरेव साधिताम् ।
शालिषष्टिकगोधूमयवमुद्गकुलत्थभुक् ॥ २५ ॥
कासहृद्ग्रहपार्श्वार्तिहिध्माश्वासप्रशान्तये ।
सक्तून्[1] वार्काङ्कुरक्षीरभावितानां समाक्षिकान् ॥ २६ ॥
यवानां दशमूलादिनिष्क्वाथलुलितान् पिबेत् ।

सर्वाङ्गसुन्दरी

**दशमूलेत्यादि ॥** दशमूलादिभिः कषायं पिबेत् । अस्मिन् कषाये परिणते तैरेव दशमूलादिभिः साधितां पेयां पिबेत् । तथा शाल्यादिभुक् स्यात् कासादिशान्त्यर्थम् । अथवाऽर्काङ्कुरक्षीरभावितानां यवानाम् सम्बन्धिनः सक्तून् समाक्षिकान् दशमूलषडीत्यादिनिर्यूहान्वितान् पिबेत् ॥

शशिलेखा

दशमूलषड्यादिभिः कषायं पीत्वा तैर्दशमूलषड्यादिभिः पेया पिबेत् । तामलकी ताली सैव भूधात्री । औषधं नागरम् । अर्काङ्कुरक्षीरभावितानां यवानां संबन्धिनः सक्तून् दशमूलषडीरास्नादिनिष्क्वाथेनालोलिताननु पिबेत् । अर्काङ्कुरक्षीरमर्काङ्कुरकषायः ॥

अन्ने च योजयेत् क्षारहिङ्ग्वाज्यबिडदाडिमान् ॥ २७ ॥
सपौष्करषडीव्योषमातुलुङ्गाम्लवेतसान् ।
दशमूलस्य वा क्वाथमथवा देवदारुणः ॥ २८ ॥
पिबेद्वा वारुणीमण्डं हिध्माश्वासी पिपासितः ।

सर्वाङ्गसुन्दरी

**अन्न इति ॥** अन्ने चाहारे च क्षारादीन् योजयेत् । हिध्माश्वासवान् पिपासितो दशमूलस्य क्वाथं देवदारुणो वाऽथवा वारुणीमण्डं पिबेत् ॥

---

1 अर्काङ्कुरैर्भावितानां यवानां साध्वनेकश इति सुश्रुतः । अर्काङ्कुरैरर्कपल्लवपुष्पकृतैः क्वाथैरिति डल्हणाचार्यकृता निबन्धसङ्ग्रहव्याख्या ।

शशिलेखा

यवक्षारादीनि च दोषाद्यपेक्षयाऽनेकप्रकारमन्ने योजयेत् । पिपासितश्च दशमूलकाथादिकं पिबेत् ॥

पिप्पलीपिप्पलीमूलपथ्याजन्तुघ्नचित्रकैः ॥ २९ ॥
कल्कितैर्लेपिते रूढे निःक्षिपेत् घृतभाजने ।
तक्रं मासस्थितं तद्धि दीपनं श्वासकासजित् ॥ ३० ॥

सर्वाङ्गसुन्दरी

**पिप्पलीत्यादि** ॥ पिप्पल्यादिभिः कल्कितैर्लेपिते घृतभाजने रूढे शुष्के तक्रं निःक्षिपेत् । तच्च तक्रं मासस्थितं दीपनं श्वासकासजित् स्यात् ॥

शशिलेखा

पिप्पल्याद्यैर्लेपोर्धाङ्गुलप्रमाणेनेत्यर्थात् । रूढे कठिनीभूते लेपे ॥

पाठां मधुरसां दारु सरळं च निशि स्थितम् ।
सुरामण्डेऽल्पलवणं पिबेत् प्रसृतिसम्मितम् ॥ ३१ ॥
भार्ङ्गीशुण्ठ्यौ सुखाम्भोभिः क्षारं वा मरिचान्वितम् ।
स्वक्वाथपिष्टाऽलुळितां वाष्पिकां पाययेत वा ॥ ३२ ॥

सर्वाङ्गसुन्दरी

**पाठेत्यादि** ॥ पाठादिकं सुरामण्डे निशि स्थितं किञ्चिल्लवणं प्रसृतिसम्मितं पलद्वयमात्रं पिबेत् । अथवा भार्ङ्गीशुण्ठ्यावुष्णाम्बुना पिबेत् । यवक्षारं मरिचयुक्तं वा । वाष्पिकां हिङ्गुपत्रिकां हिङ्गुपत्रिकाकाथेन पिष्टां तेनैवालुळितां वा पाययेत् ॥

शशिलेखा

मधुरसा मूर्वा । दारु देवदारु । सरळं पीडारूयं देवदारुसदृशमेव । द्वे पले प्रसृतः । कोष्णेन जलेन भार्ङ्गीशुण्ठ्यौ पिबेत् । मरिचयवक्षारं वा । सुबोधम् ॥

स्वरसः सप्तपर्णस्य पुष्पाणां वा शिरीषतः ।
हिध्माश्वासे मधुकणायुक्तं पित्तकफानुगे ॥ ३३ ॥

उत्कारिकातुकाकृष्णामधूलीघृतनागरैः ।
पित्तानुबन्धे योक्तव्या पवने त्वनुबन्धिनि ॥ ३४ ॥
श्वाविट्छशामिषकणाघृतशल्यकशोणितैः ।

सर्वाङ्गसुन्दरी

**स्वरस इति ॥** अथवा सप्तपर्णस्यायुग्मच्छदस्य स्वरसः शिरीषात् पुष्पाणां वा स्वरसः तौ मधुकणायुतौ पित्तकफानुगे हिध्माश्वासे सति पाययेत् । कदाचित् सप्तपर्णस्य स्वरसमेवं पाययेत् । कदाचित् शिरीषपुष्पाणां स्वरसम् । पित्तानुबन्धिनि हिध्माश्वासे तुकादिभिरुत्कारिका योज्याः । मधूळी जलजा मधुयष्टीः । गोधूमविशेषो वा । पवने पुनरनुबन्धिनि सति श्वाविडादिभिरुत्कारिका निष्पादिता योज्या ॥

शशिलेखा

पित्तकफानुगे हिध्माश्वासे सप्तपर्णस्वरसो मधुपिप्पलीयुक्तः । शिरीषपुष्पस्वरसो वा मधुपिप्पलीयुक्तः । पित्तानुबन्धे हिध्माश्वासे तुकादिभिरुत्कारिका योज्या । मधूळी मधुयष्टिः । वातानुबन्धजे पुनः श्वाविण्मांसादिभिः । शल्यकशोणितान्तैरुत्कारिका ॥

सुवर्चलारसव्योषसर्पिर्भिः[1] सहितं पयः ॥ ३५ ॥
अनु शाल्योदनं पेयं वातपित्तानुबन्धिनि ।
चतुर्गुणाम्बुसिद्धं वा छागं सगुडनागरम् ॥ ३६ ॥

सर्वाङ्गसुन्दरी

**सुवर्चलेति ॥** हिध्माश्वासे वातपित्तानुबन्धिनि सति सुवर्चलारसादिभिः सिद्धं पयोऽनु शाल्योदनं पेयम् । शाल्योदनं भुक्त्वा पश्चात् क्षीरं पेयम् । गव्यं छागं वा देशसात्म्यादिवशात् । अथवा चतुर्गुणाम्बुसिद्धं छागं क्षीरं गुडनागराभ्यां युक्तं पिबेत् ॥

शशिलेखा

वातपितानुबन्धिनि शाल्योदनमनु सुवर्चलारसादियुक्तं क्षीरं पेयम् । चतुर्गुणाम्बुसिद्धं छागं पयो वातपित्त एव ॥

1 സുവർചലാ=ചന്ദ്രികാന്തരിൽ.

पिप्पलीमूलमधुकगुडगोश्वशकृद्रसान् ।
हिध्माभिष्यन्दकासघ्नान् लिह्यान्मधुघृतान्वितान् ॥ ३७ ॥

गोगजाश्ववराहोष्ट्रखरमेषाजविड्रसम् ।
समध्वेकैकशो लिह्याद्बहुश्लेष्माऽथवा पिबेत् ॥ ३८ ॥

चतुष्पाच्चर्मरोमास्थिखुरशृङ्गोद्भवां मषीम् ।
तथैव वाजिगन्धाया लिह्याच्छ्वासी कफोद्बणः ॥ ३९ ॥

षडीपौष्करधात्रीर्वा पौष्करं वा कणान्वितम् ।
गैरिकाञ्जनकृष्णां वा स्वरसं वा कपित्थजम् ॥ ४० ॥

रसेन वा कपित्थस्य धात्रीसैन्धवपिप्पलीः ।
घृतक्षौद्रेण वा पथ्याविडङ्गोषणपिप्पलीः ॥ ४१ ॥

कोललाजमधुद्राक्षापिप्पलीनागराणि वा ।
गुडतैलनिशाद्राक्षाकणारास्नोषणानि वा ॥ ४२ ॥

पिबेद्रसाम्बुमद्याद्यैर्लेहौषधरजांसि वा ।

## सर्वाङ्गसुन्दरी

पिप्पलीत्यादि ॥ पिप्पलीमूलादीन् सम्मिश्रच मधुघृतान्वितान् हिध्माभिष्यन्दकासघ्नान् लिह्यात् । गोगजादीनां शकृद्रसं बहुकफः समाक्षिकमेकैकशो लिह्यादथवा पिबेत् । तथैव चतुष्पदाञ्चर्मादिजां मषीं पिबेत् । श्वासी कफाधिकोऽश्वगन्धायाश्च मषीं तद्वन्मधुना लिह्यात् । षडीपौष्करधात्रीर्वा मधुना लिह्यात् । पौष्करं सकणं वा लिह्यात् । गैरिकादीर्वा लिह्यात् । कपित्थजं स्वरसं वा । कपित्थस्य रसेन सह धात्र्यादीर्वा लिह्यात् । पथ्याविळङ्गादीन् घृतक्षौद्रेण वा लिह्यात् । कोलादीन् वा पूर्ववल्लिह्यात् । मधु मधुयष्टिः । गुडादीन् वा । अथवा लेहस्यागस्त्यादेरौषधानां चूर्णानि मांसरसादिभिः पिबेत् ॥

## शशिलेखा

पिप्पलीमूलादिकं सम्मिश्रच मधुघृतान्वितम् । सुबोधम् । गवादीनां विड्रसस्य समधोः पृथक्प्रयोगो बहुश्लेष्मणः । तस्यैव चतुष्पाच्चर्माद्युद्भवः क्षारः । अश्वगन्धाया केवलाया भस्म समधु । षड्यादित्रयं मधुना । तद्वत् पिप्पलीपौष्कर-

मूलम् । तद्वत् गैरिकादित्रयं कपित्थफलजो रसो मधुनैव । धान्यादिकं कपित्थ-रसेन । पथ्यादिकं घृतक्षौद्रेण । ऊषणं मरिचम् । कोलादिनार्धश्लोकेनैको लेहः । गुडादिना द्वितीयः । यैश्चौषधैरनन्तरं लेहा उक्तास्तान्येव द्रव्याणि तैरेव संयोगैश्चूर्णितानि दोषाद्यपेक्षया मांसरसादीनामन्यतमेन पिबेत् ॥

जीवन्तीमुस्तसुरसत्वगेलाद्वयपौष्करम् ॥ ४३ ॥

चण्डातामलकीलोहभार्ङ्गीनागरवाळकम् ।
कर्कटाख्याषडीकृष्णानागकेसरचोरकम् ॥ ४४ ॥

उपयुक्तं यथाकामं चूर्णं द्विगुणशर्करम् ।
पार्श्वरुग्ज्वरकासघ्नं हिध्माश्वासहरं परम् ॥ ४५ ॥

षडीतामलकीभार्ङ्गीचण्डावाळकपौष्करम् ।
शर्कराष्टगुणं चूर्णं हिध्माश्वासहरं परम् ॥ ४६ ॥

तुल्यं गुडं नागरं च भक्षयेन्नावयेत वा ।

सर्वाङ्गसुन्दरी

जीवन्तीत्यादि ॥ जीवन्त्यादिकं चूर्णं द्विगुणशर्करं यथाकामं भुक्तं पार्श्वरुगादिघ्नं परमतिशयेन हिध्मादिहरम् । लोहमगरु । षड्यादिकं चूर्णं पूर्वगुणम् । तुल्यांशं गुडं शुण्ठीं च भक्षयेन्नस्यं वा दद्यात् ॥

शशिलेखा

जीवन्त्यादिकं चूर्णं द्विगुणशर्करं यथाकामं यथेच्छमाहारपानादिना लेहादिना च । षड्यादि सुबोधम् । तुल्यमित्यादि च ॥

लशुनस्य पलाण्डोर्वा मूलं गृञ्जनकस्य वा ॥ ४७ ॥

चन्दनाद्वा रसं दद्यान्नारीक्षीरेण नावनम् ।
स्तन्येन मक्षिकाविष्ठामलक्तकरसेन वा ॥ ४८ ॥

सर्वाङ्गसुन्दरी

लशुन इत्यादि ॥ लशुनादीनां मूलं पिष्ट्वा नारीक्षीरेण पृथक् पृथक् नावनं दद्यात् । हिध्माश्वासार्ताय चन्दनाद्वा रसं नारीक्षीरेण सह मेळयित्वा नस्यं दद्यादथवा मक्षिकाविष्ठान्नारीक्षीरेण सह नस्यं दद्यात् । अलक्तकरसेन वा ॥

शशिलेखा

लशुनमूलादीनि नावनानि नारीक्षीरेण। चन्दनाद्रक्तचन्दनाद्रस एव। अलक्तकरसेन मक्षिकाविष्ठां नावयेदिति सम्बन्धः। अथवा तामपि स्तन्येन॥

कणासौवर्चलक्षारवयस्थाहिङ्गुचोरकैः।
सकायस्थैर्घृतं मस्तुदशमूलरसे पचेत् ॥ ४९ ॥

तत् पिबेज्जीवनीयैर्वा लिह्यात् समधु साधितम्।

सर्वाङ्गसुन्दरी

**कणेति** ॥ कणादिभिः कल्कैर्मस्तुदशमूलरसे स्नेहपाकविध्युक्तपरिभाषामाश्रित्य घृतं पक्त्वा हिध्माश्वासार्तः पिबेत्। जीवनीयैर्वा द्रव्यैर्घृतं पक्त्वा समाक्षिकं लिह्यान्न पिबेत्। विषयभेदादेवं कार्यम्। अथवा वस्तुस्वभावादेकस्मिन्नपि विषये कणादिभिः पक्वं घृतं पीतं हिध्माश्वासार्तानामारोग्याय। जीवनीयैः पुनः कल्कैः पक्वं घृतं लीढं तेषामारोग्यायेति॥

शशिलेखा

मस्तुदशमूलक्वाथयोर्मिश्रितयोर्घृताच्चतुर्गुणत्वम्। कणादीनां परिभाषया कल्कः। वयस्था आमलकम्। कायस्था हरीतकी। जीवनीयैर्वा साधितं घृतं समधु लिह्यात्॥

तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी ॥ ५० ॥

पूतीकं पौष्करं मूलं पलाशश्चित्रकः शटी।
पटुद्वयं तामलकी जीवन्ती बिल्वपेशिका ॥ ५१ ॥

वचा पत्रं च तालीसात् कर्षांशैस्तैर्विपाचयेत्।
[1]हिङ्गुपादैर्घृतप्रस्थं पीतमाशु निहन्ति तत् ॥ ५२ ॥

[2]शाखानिलार्शोग्रहणीहिध्माहृत्पार्श्ववेदनाः।
अर्धांशेन पिबेत् सर्पिः क्षारेण पटुनाऽथवा ॥ ५३ ॥

---

1 "हिङ्गुपादैर्घृतप्रस्थं पचेत्तोये चतुर्गुणे" इति चरकपाठः।
2 श्वासानिलार्शो........ इति सङ्ग्रहपाठः।

धान्वन्तरं वृषघृतं दाधिकं हपुषादि वा ।

सर्वाङ्गसुन्दरी

**अर्धांशेनेत्यादि ॥** धान्वन्तरादिघृतस्यार्धांशेन क्षारेणाऽथवा पटुना लवणेनार्धांशेन युक्तः सर्पिः पिबेत् । धान्वन्तरं प्रमेहोक्तम् । वृषघृतं रक्तपित्तोक्तम् । दाधिकं गुल्मोक्तम् । हपुषादिकञ्च ॥

शशिलेखा

केवलं सर्पिः क्षारस्याथवा सैन्धवस्यार्धभागेन युक्तं पिबेत् ॥ सर्पिरत्र पुराणं ग्राह्यम्, "सैन्धवार्धांशयुक्तं वा पुराणं पाययेत् घृतम्" इति सङ्ग्रहवचनात् ॥

शीताम्बुसेकः सहसा त्रासविक्षेपभीशुचः ॥ ५४ ॥

हर्षेर्ष्योच्छ्वासरोधाश्च हितं कीटैश्च दंशनम् ।
यत्किञ्चित्कफवातघ्नमुष्णं वातानुलोमनम् ॥ ५५ ॥

तत्सेव्यं प्रायशो यच्च सुतरां मारुतापहम् ।

सर्वाङ्गसुन्दरी

**शीताम्बुसेक इत्यादि ॥** सहसा झटित्यज्ञातसेकस्यैव हिध्माश्वासार्तस्य शीताम्बुना सेको हितः । त्रासश्चित्तस्योद्वेगकृत्कर्म । विक्षेपोऽवधूननम् । भीर्भयम् । शुक् शोकश्चेतसः सन्तापः । त्रासादयश्चतस्रस्तमोगुणोद्भवाः । हर्षश्चेतसः सत्त्वगुणोद्भवः । ईर्ष्या असूया परगुणासहिष्णुता रजोगुणोदयतः । तथा श्वासस्य रोधः । एते च सर्वे हिध्माश्वासार्ताय हिताः । तथा कीटैः पिपीलिकादिभिस्तस्मिन् दंशनं हितं वातवेगविघाताय । एवं हिध्माश्वासानां विशेषेण चिकित्सामुक्त्वा सामान्येनाह— यत्किञ्चिदित्यादि । यत्किञ्चिदाहारविहारौषधादिकं कफवातौ पृथक् सहितौ वा निहन्तीति कफवातघ्नम् । तथोष्णं न शीतं कफवातघ्नं हि प्रायेणोष्णमेव भवति । उष्णमिति यदिह कृतं तदतिशयेनोष्णं न त्वीषदुष्णमिति प्रतिपादनार्थम् । तथा वातानुलोमनं कफवातघ्न-

1 अरुणदत्तेन धान्वन्तरादिघृतानामर्धांशेन क्षारेण यः सम्बन्धः प्रतिपादितः सोऽयुक्तः चरकसङ्ग्रहविरुद्धत्वात् हेमाद्रिचन्द्रनन्दनेन्द्वादिव्याख्याविरुद्धत्वाच्च ।

त्वेनैव वातानुलोमकारित्वे लब्धे प्राधान्येन वातप्रतिपक्षेण स्निग्धेन यदुक्तं तद्धिध्मा-श्वासार्तैः सेव्यम्। कफवातघ्नमधिकोष्णञ्च यत्तत्सेव्यमिति प्रतिपादितमत आह— प्रायश इति— प्रायशो बाहुल्येन यत् मारुतापहं मारुतशमनं तद्धिध्माश्वासार्तैः सुतरां सेव्यम्॥

शशिलेखा

सहसा शीताम्बुसेकादिक हितं कीटैश्च दंशनं वातवेगविघाताय। सुबोधम्। प्रायोग्रहणमशेषविषयत्वप्रतिषेधार्थम्॥

किमेवं क्रियत इत्याह—

**सर्वेषां[1] बृंहणे ह्यल्पः शक्यश्च प्रायशो भवेत् ॥ ५६ ॥**
**नात्यर्थं शमनेऽपायो भृशोऽशक्यश्च कर्शने।**
**शमनैर्बृंहणैश्चातो भूयिष्ठं तानुपाचरेत् ॥ ५७ ॥**

सर्वाङ्गसुन्दरी

**सर्वेषामित्यादि**॥ सर्वेषां हिध्माश्वासार्तानां हि यस्मात् बृंहणे विधीयमाने कदाचिद्दैववशाद्योऽपायो रोगाधिक्यमन्यरोगप्रादुर्भावो वा भवेत्, सः प्रायशोऽल्पः तथा शक्यः साधयितुं शक्यते। तथा तेषां शमने भेषजादौ क्रियमाणे योऽपायो यदि दैवात्स्यात् स नात्यर्थं नातिशयेन किं तर्हि मध्यमया वृत्त्या। हिध्माश्वासशान्त्यर्थं कर्शने भिषजा क्रियमाणे यो रोगो जायते, स भृशो दुःसहोऽत एवाऽशक्यः साधयितुं न शक्यते। यत एवं कर्शने भृशोऽशक्यश्चापायो भवति, अतोऽस्मात् कारणात् तान् हिध्माश्वासार्तान् भूयिष्ठं बाहुल्येन शमनैर्भेषजाद्यैस्तथा बृंहणैरुपाचरेत्॥

शशिलेखा

तांश्च हिध्माश्वासान् शमनैर्बृंहणैश्च कर्मभिरुपाचरेत्, न कर्शनेन। यतः सर्वेषां हिध्माश्वासानां बृंहणे क्रियमाणे अल्पोऽपायो भवेन्न सद्योऽपि भवेत्

1 शमनबृंहणकर्शनानां क्रमाद्धीनत्वमाह— यन्न बृंहणं न च कर्शनं तच्छमनम्। तत्र नात्यर्थमपायः। अपायो बृंहणे तु कदाचित् भवेत्, स चाल्पः, स च शक्यः। कर्शने तु सदा, स चानल्पः, स घाशक्यः। अतः कर्शनं न कार्यम्। प्रथमं शमनैस्तैरनुपशमे बृंहणैः। भूयिष्ठग्रहणात् कस्याञ्चिदवस्थायां कर्शनैरित्ति हेमाद्रिः।

सोऽपि चिकित्सितुं शक्यो भवेत्। शमने पुनरपाय एव न भवेत्। कर्शने तु भृशमपायो भवेत्। चिकित्सितुमशक्यश्च भवेत्। भूयिष्ठं बाहुल्येन॥

अधुना कासादीनां पञ्चानामप्येषां सामान्येन चिकित्सां वक्तुकाम आह—

कासश्वासक्षयच्छर्दिहिध्माश्चान्योन्यभेषजैः।

सर्वाङ्गसुन्दरी

**कासेत्यादि**॥ कासोक्तैर्भेषजैः श्वासादीनुपाचरेत्। श्वासाद्युक्तैः कासानुपाचरेत्। एवं परस्परं सर्वैर्यथोक्तैर्भेषजैः सर्वानेतानुपाचरेदिति॥

शशिलेखा

कासादींश्च परस्परेणोपाचरेत्। यदेकस्यौषधं तच्छेषाणां चतुर्णामपीत्यर्थः॥

इति चिकित्सिते चतुर्थोऽध्यायः॥





# पञ्चमोऽध्यायः

श्वासहिध्माचिकित्सितादनन्तरं राजयक्ष्मचिकित्सितारंभेऽयं हेतुः। "कासश्वासक्षयच्छर्दिहिध्माश्चान्योन्यभेषजै"रुपाचरेदित्युक्तम् । क्षयश्च राजयक्ष्मा तस्मादेतदारभ्यते ॥

अथाऽतो राजयक्ष्मादिचिकित्सित नामाध्यायं व्याख्यास्यामः ॥
इति ह स्माहुरात्रेयादयो महर्षयः ॥

बलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनम् ।
ऊर्ध्वाधो यक्ष्मिणः कुर्यात् सस्नेहं यन्न कर्शनम् ॥ १ ॥

पयसा फलयुक्तेन मधुरेण रसेन वा ।
सर्पिष्मत्या यवाग्वा वा वमनद्रव्यसिद्धया ॥ २ ॥

वमेत् विरेचनं दद्यात्त्रिवृच्छ्यामानृपद्रुमान् ।
शर्करामधुसर्पिर्भिः पयसा तर्पणेन वा ॥ ३ ॥

द्राक्षाविदारीकाश्मर्यमांसानां वा रसैर्युतान् ।

सर्वाङ्गसुन्दरी

**बलित इत्यादि** ॥ बहुदोषस्य बलिनो राजयक्ष्मिण ऊर्ध्वाधः शोधनं वमनं विरेचनं च कुर्यात् । अस्निग्धस्विन्नस्य शोधनार्हत्वात् स्निग्धस्विन्नग्रहणमतिशयार्थम् । किंभूतं शोधनम् ? सस्नेहमीषत्स्निग्धं यत्तथा यन्न कर्शनं देहस्य न क्षपणम् । यक्ष्मिण इति द्वन्द्वोपतापेत्यादिना इनिर्मत्वर्थीयः। तत्र वमनमाह—पयसेत्यादि । पयसा क्षीरेण मदनफलान्वितेन राजयक्ष्मी वमेत् । एवं तेन वमनं कार्यम् । मधुरेण मांसरसेन वा मदनफलयुक्तेन वमेत् । अथवा यवाग्वा घृतवत्या तथा वमनद्रव्येण मदनफलादिना सिद्धया वमेत् । विरेचनमाह—विरेचनमित्यादि । त्रिवृतादीनेकैकशः शर्करामधुसर्पिर्भिर्युतान् विरेचनं दद्यात् । अथवा पयसा संयुतान् त्रिवृतादीन् । तर्पणेन

वा सह त्रिवृतादीन् विरेचनं दद्यात्। रसैरिति बहुवचननिर्देशात् द्राक्षादीनां पृथग्रसैरिति बोध्यम् ॥

शशिलेखा

**बलिन इत्यादि** ॥ सुबोधम्। ऊर्ध्वमिति वमनेन। अध इति विरेचनेन। पयसेत्यादिना वमेदिति सम्बध्यते। क्षीरेण वा मधुरेण मांसरसेन वा फलयुक्तेन। त्रिवृतादीन् पृथग्भूतान् शर्करादीनामन्यतमेन सह विरेचनं दद्यात्। तर्पणं सक्तवः। अथवा त्रिवृतादीन् द्राक्षादीनामन्यतमस्य रसेन युतान् ॥

**शुद्धकोष्ठस्य युञ्जीत विधिं बृंहणदीपनम्** ॥ ४ ॥
**हृद्यानि चान्नपानानि वातघ्नानि लघूनि च।**
**शालिषष्टिकगोधूमयवमुद्गं समोषितम्** ॥ ५ ॥
**आजं क्षीरं घृतं मांसं क्रव्यान्मांसञ्च शोषजित्।**
**काकोलूकवृकद्वीपिगवाश्वनकुलोरगम्** ॥ ६ ॥
**गृध्रभासखरोष्ट्रञ्च हितं छद्मोपसंहितम्।**
**ज्ञातं जुगुप्सितं तद्धि छर्दिषे न बलौजसे** ॥ ७ ॥

सर्वाङ्गसुन्दरी

**शुद्धकोष्ठस्येति** ॥ शुद्धकोष्ठस्य सतो यक्ष्मिणो बृंहणं दीपनञ्च विधिं प्रयुञ्जीत। तथाऽन्नपानानि हृद्यानि हृदयप्रीणनानि तथा वातघ्नानि लघूनि च युञ्जीत। बाहुल्येनैतदुक्तम्। तथा चाह। शालिषष्टिकगोधूमयवमुद्गमिति। तथा शाल्यादिकं वर्षोषितं युञ्जीत। आजं क्षीरं घृतं मांसं तथा क्रव्यान्मांसञ्च क्षयजित्। काकोलूकादिकमेतन्मांसं हितम्। किंभूतम्। छद्मनोपसंहितम्। काकादयस्तित्तिर्यादिशब्देन देया इत्यर्थः। किमित्येवं क्रियत इत्याह—यस्मात्तज्जुगुप्सितं ज्ञातं सच्छर्दिषे सम्पद्यते न बलाय न चौजसे ॥

शशिलेखा

**शुद्धकोष्ठस्येत्यादि** ॥ सुबोधम्। समास्थितं संवत्सरोषितम्। काकादिकं छद्मोपसंहितम्। तथा चरकः—"काकांस्तित्तिरिशब्देन मत्स्यशब्देन चोरगान्

1 **समास्थितमितीन्दुः।**

दध्यानमत्स्यान्तशब्देन पृथग्गण्डूपदानपि" इत्येवमादि। ज्ञातमित्यादि छन्दोपसंहितत्वे हेतुः ॥

मृगाद्याः पित्तकफयोः पवने प्रसहादयः ।
वेशवारीकृताः पथ्या रसादिषु च कल्पिताः ॥ ८ ॥
भृष्टाः सर्षपतैलेन सर्पिषा वा यथायथम् ।
रसिका मृदवः स्निग्धा पटुद्रव्याभिसंस्कृताः ॥ ९ ॥
हिता मौलककौलत्थास्तद्वद्यूषाश्च साधिताः ।
सपिप्पलीकं सयवं सकुलत्थं सनागरम् ॥ १० ॥
सदाडिमं सामलकं स्निग्धमाजं रसं पिबेत् ।
तेन षड् विनिवर्तन्ते विकाराः पीनसादयः ॥ ११ ॥

सर्वाङ्गसुन्दरी

**मृगाद्या इत्यादि ॥** मृगाद्या मृगविष्किरप्रतुदाः पित्तकफयोर्हिताः । वाते प्रसहादयो महामृगाप्चरादयो हिताः । किंभूताः—वेशवारीकृताः कुट्टिताः पथ्याः । तथा रसादिषु मांसरसादिषु कल्पिताः । तथा सर्षपतैलेन भृष्टाः । सर्पिषा वा देशकालाद्यपेक्षया यथायथं भृष्टाः । तथा रसिकाः प्रशस्तरसवन्तः । प्रशंसायामेष मत्वर्थीयः । मृदवो न तीक्ष्णाः । तथा स्निग्धाः सैन्धवादिभिः कृतसंस्काराश्च हिताः । तद्वत्तथैव मूलकादिकृता यूषाः । पिप्पल्यादिभिः संस्कृतं स्निग्धमाजं मांसरसं पिबेत् । अत्र मांसरसस्यावश्यं स्निग्धत्वेऽपि स्निग्धग्रहणमस्य यथादोषं घृतादिस्नेहेन स्निग्धत्वं कार्यमिति प्रतिपादयति । तेन रसेन पीतेन षड्विकाराः पीनसादयः· पीनसश्वासकासांसमूर्धस्वररुजः शाम्यन्ति ॥

शशिलेखा

मृगाद्याः मृगविष्किरप्रतुदविलेशयाः । शेषाः प्रसहादयः । वेशवारीकृता इत्यादि सर्वेषां विशेषणम् । रसिकादयः सर्वे आहारप्रकाराः । रसिका रसवन्तः । भृष्टा भर्जिताः । सपिप्पलीकमित्यादि सुबोधम् ॥

---

1 मौद्गक इति सङ्ग्रहे पाठः ।

पिबेच्च सुतरां मद्यं जीर्णं स्रोतोविशोधनम् ।
पित्तादिषु विशेषेण मध्वरिष्टाच्छवारुणीः ॥ १२ ॥
सिद्धं वा पञ्चमूलेन तामलक्याऽथवा जलम् ।
पर्णिनीभिश्चतसृभिर्धान्यनागरकेण वा ॥ १३ ॥
कल्पयेच्चानुकूलोऽस्य तेनान्नं शुचि यत्नवान् ।

सर्वाङ्गसुन्दरी

पिबेदिति ॥ अतितरां जीर्णं पुराणं च मद्यं स्रोतोविशुद्धिकरं पिबेत्। पित्तादिषु पित्तकफवातेषु यथासंख्यं मध्वादीन् विशेषेण पिबेत्। अथवा पञ्चमूलेन सिद्धं जलं पिबेत् । तामलक्या वा पर्णिनीभिश्चतसृभिर्वा जलं पक्वं पिबेत् । धान्यकनागराभ्यां वा श्रृतं पिबेत् । अस्य च यक्ष्मिणोऽनुकूलो यत्नवान् परिचारकोऽन्नं शुचि तेन पञ्चमूलादिजलेन कल्पयेत् पाचयेत् । अनुकूलादिग्रहणमतिशयार्थम् ॥

शशिलेखा

पिबेदित्यादि ॥ सुबोधम् । पञ्चमूलेन तामलक्या वा सिद्धं जलं पिबेत । तेनेति पञ्चमूलेन ॥

दशमूलेन पयसा सिद्धं मांसरसेन वा ॥ १४ ॥
बलागर्भं घृतं योज्यं, क्रव्यान्मांसरसेन वा ।
सक्षौद्रं पयसा सिद्धं सर्पिर्दशगुणेन वा ॥ १५ ॥
जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च ।
पुष्कराह्वं शठीं कृष्णां व्याघ्रीं गोक्षुरकं बलाम् ॥ १६ ॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम् ।
कल्कीकृत्य घृतं पक्वं रोगराजहरं परम् ॥ १७ ॥
घृतं खर्जूरमृद्वीकामधुकैः सपरूषकैः ।
सपिप्पलीकं वैस्वर्यकासश्वासज्वरापहम् ॥ १८ ॥

सर्वाङ्गसुन्दरी

दशमूलेनेति ॥ दशमूलक्वाथेन तथा पयसा अथवा मांसरसेन बलाकल्कं घृतं साधितं योज्यम् । क्रव्यान्मांसरसेन वा बलागर्भं पक्वं घृतं योज्यम् ।

क्षीरेण वा दशगुणेन बलागर्भं शृतं घृतं सक्षौद्रं योज्यम् । जीवन्त्यादीन् कल्कीकृत्य घृतं चतुर्गुणे जले पक्वं परं रोगराजहरम् । कल्कीकृत्य पक्वमित्यनुवर्तते । खर्जूरादिभिः कल्कीकृत्य घृतं पक्वं पिप्पलीचूर्णेन युक्तं वैस्वर्यादिहरम् ॥

शशिलेखा

दशमूलेन पयसा मांसरसेन च बलागर्भं घृतम् । अथवा क्रव्यादानां मांसरसेन । सर्पिषो दशगुणेन च पयसा सिद्धं घृतं सक्षौद्रं योज्यम् । जीवन्त्याद्ये घृते जलं स्नेहसमम् । खर्जूरादिभिर्जलेन च पक्वे घृते पिप्पल्याश्चूर्णो योज्यः ॥

दशमूलशृतात् क्षीरात् सर्पिर्यदुदियान्नवम् ।
सपिप्पलीकं सक्षौद्रं तत्परं स्वरबोधनम् ॥ १९ ॥

शिरःपार्श्वांसशूलघ्नं कासश्वासज्वरापहम् ।
पञ्चभिः पञ्चमूलैर्वा शृताद्यदुदियाद् घृतम् ॥ २० ॥

पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे ।
सिद्धं सर्पिर्जयत्येतद्यक्ष्मणः सप्तकं बलम् ॥ २१ ॥

पञ्चकोलयवक्षारषट्पलेन पचेद् घृतम् ।
प्रस्थोन्मितं तुल्यपयः स्रोतसां तद्विशोधनम् ॥ २२ ॥

गुल्मज्वरोदरप्लीहग्रहणीपाण्डुपीनसान् ।
श्वासकासाग्निसदनश्वयथूर्ध्वानिलान् जयेत् ॥ २३ ॥

सर्वाङ्गसुन्दरी

**दशमूलशृतादिति ॥** दशमूलक्वथितात् क्षीराद्यत् सर्पिरुदियादुद्गच्छेत् तत् प्रत्यग्रं सर्पिः पिप्पलीक्षौद्रान्वितमतिशयेन स्वरबोधनं शिरःपार्श्वांसशूलघ्नं कासादिहरम् । अथवा पञ्चभिः पञ्चमूलैः शृतात् क्षीराद्यदुद्भवेत् घृतं तत् पूर्वगुणम् । पञ्चानां पञ्चमूलानां रसे क्षीरचतुर्गुणे पक्वमेतत् सर्पिः यक्ष्मणः सप्तकं बलं पीनसादिकं जयति । पञ्चकोलयवक्षाराणां षड्भिः पलैः प्रस्थप्रमाणं घृतं तुल्यक्षीरं पचेत् । तत् स्रोतसां विशोधनं स्यात् । तथा गुल्मादीन् जयेत् । अत्र चानुक्तमपि जलं स्नेहाच्चतुर्गुणं देयं पूर्वोक्तन्यायात् ॥

शशिलेखा

**दशमूलेति** ॥ नवं सर्पिर्नवनीतम् — पञ्च पञ्चमूलानि महद्ह्रस्वमध्यमजीवन तृणाख्यानि क्षीरकथने । ततः क्षीरादजातादेव नवनीतं ग्राह्यम् । तत् घृतं पञ्च पञ्चमूलक्काथे स्नेहाच्चतुर्गुणे विपाच्यम् । क्काथात् क्षीरं चतुर्गुणम् । सप्तकं बलं कण्ठोध्वंसादिसप्तोपद्रवकृतम् । षट्पलेन प्रत्येकं द्रव्यपलिकम् । जलेन विना द्रव्याणां रसो न निर्यातीति स्मर्तव्यम् । अन्ये तु प्रतिपदपठितत्वाद्द्रवस्य क्षीरस्य जलं नैवेच्छन्ति ॥

**रास्नाबलागोक्षुरकस्थिरावर्षाभुवारिणि ।**
**जीवन्तीपिप्पलीगर्भं सक्षीरं शोषजित् घृतम् ॥ २४ ॥**

**अश्वगन्धाश्रृतात् क्षीरात् घृतं च ससितापयः ।**
**साधारणामिषतुलां तोयद्रोणद्वये पचेत् ॥ २५ ॥**

**तेनाष्टभागशेषेण जीवनीयैः पलोन्मितैः ।**
**साधयेत् सर्पिषः प्रस्थं वातपित्तामयापहम् ॥ २६ ॥**

**मांससर्पिरिदं पीतं युक्तं मांसरसेन वा ।**
**कासश्वासस्वरभ्रंशशोषहृत्पार्श्वशूलजित् ॥ २७ ॥**

सर्वाङ्गसुन्दरी

**रास्नेत्यादि**—रास्नादिक्काथे जीवन्तीपिप्पलीकल्कं क्षीरसहितं पक्कं घृतं शोषजित् । अश्वगन्धाश्रृतात् क्षीरादुद्भूतं घृतं शर्कराक्षीरयुतं पूर्वोक्तगुणम् । साधारणामिषविलेशयप्रसहानां मांसस्य तुलां जलद्रोणद्वये पचेत् । तेनाष्टभागशेषेण क्काथेन जीवनीयैः पालिकैः सर्पिषः प्रस्थं पचेत् । मांससर्पिःसंज्ञमेतत् केवलं पीतं मांसरसेन वा युक्तं पीतं वातपित्तामयघ्नं कासादिजित् ।

शशिलेखा

रास्नादीनां क्काथे जीवन्तीपिप्पलीगर्भम् । गर्भं कल्कः । अश्वगन्धाश्रृतात् क्षीरात् प्रमथ्य गृहीतं घृतं शर्कराक्षीरसंयुतं शोषजित । साधारणानि मांसानि विलेश-प्रसहानाम् । तेनेति द्रोणद्वयपरामर्शः । मांसरसेन वा भोज्येषु प्रयुक्तम् :

**एलाजमोदात्रिफलासौराष्ट्रीव्योषचित्रकान् ।**
**सारानरिष्टगायत्रीसालबीजकसंभवान् ॥ २८ ॥**

भल्लातकं विळङ्गञ्च पृथगष्टपलोन्मितम् ।
सलिले षोडशगुणे षोडशांशस्थितं पचेत् ॥ २९ ॥

पुनस्तेन घृतप्रस्थं सिद्धे चास्मिन् पलानि षट् ।
तुकाक्षीर्याः क्षिपेत्त्रिंशत्सिताया द्विगुणं मधु ॥ ३० ॥

घृतात्त्रिजातात्त्रिपलं ततो लीढं खजाहतम् ।
पयोनुपानं तत् प्राह्णे रसायनमयन्त्रणम् ॥ ३१ ॥

मेध्यं चक्षुष्यमायुष्यं दीपनं हन्ति चाचिरात् ।
मेहगुल्मक्षयव्याधिपाण्डुरोगभगन्दरान् ॥ ३२ ॥

ये च सर्पिर्गुळाः प्रोक्ताः क्षते योज्याः क्षयेऽपि ते ।
त्वगेलापिप्पलीवांशीशर्कराः द्विगुणाः क्रमात् ॥ ३३ ॥

चूर्णिता भक्षिताः क्षौद्रसर्पिषा वाऽवलेहिताः ।
स्वर्याः कासक्षयश्वासपार्श्वरुक्कफनाशनाः ॥ ३४ ॥

सर्वाङ्गसुन्दरी

एलेत्यादि ॥ एलादि प्रत्येकमष्टपलप्रमाणं षोडशगुणे जले षोडशांशस्थितं षोडशांशावशेषितं यथा स्यात्तथा पचेत् । तेन क्वाथेन पुनर्घृतप्रस्थं पचेत् । सिद्धे चास्मिन् घृते तुकाक्षीर्याः पलानि षट् सितायास्त्रिंशत् पलानि माक्षिकं घृताद्द्विगुणं प्रस्थौ द्वावित्यर्थः । त्रिजातात् पलत्रयं तदेतस्मिन् क्षिपेत् । खजाहतं समीकरणाय दर्व्यालोळितम् । पूर्वाह्णे लीढं पयोनुपानं रसायनमयन्त्रणं निर्यन्त्रणं मेध्यादिगुणं स्यात् । आश्वेव गुल्मादीन् हन्ति । ये च क्षते सर्पिर्गुळाः प्रोक्ता गदिताः ते क्षयेऽपि योज्याः । त्वगेलादयः क्रमेण द्विगुणाश्चूर्णिता भुक्ताः माक्षिकसर्पिर्भ्यां वाऽवलेहिताः स्वर्याः स्वराय हिताः स्युः । कासादिघ्नाश्च ॥

शशिलेखा

एलादिको लेहः सुबोधः । घृताद्द्विगुणं मधु । ये क्षते उरःक्षते प्रोक्तास्ते सर्पिर्गुळाः क्षयेपि राजयक्ष्मणि च योज्याः । त्वगेलेति — त्वचो द्विगुणाः एलाः । ताभ्यः पिप्पल्यः । ताभ्यस्तुकाक्षीरी[1] । तस्याः शर्करेति क्रमार्थः । एकद्विचतुरष्टषोडशांशा इत्यर्थः ॥

1 "पिप्पलीक्षीरीशर्कराः" इति सङ्ग्रहे । अत्र क्षीरी तुगाक्षीरी ।

विशेषात् स्वरसादेऽस्य नस्यधूमादि योजयेत् ।
तत्राऽपि वातजे कोष्णं पिबेदौत्तरभक्तिकम् ॥ ३५ ॥

कासमर्दकवार्ताकीमार्कवस्वरसैर्घृतम् ।
साधितं कासजित्स्वर्यं सिद्धमार्तगळेन वा ॥ ३६ ॥

बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् ।
तैलं वा मधुकद्राक्षापिप्पलीक्रिमिनुत्फलैः ॥ ३७ ॥

हंसपाद्याश्च मूलेन पक्वं नस्तो निषेचयेत् ।
सुखोदकानुपानश्च ससर्पिष्कं गुडौदनम् ॥ ३८ ॥

अश्नीयात् पायसं चैवं, स्निग्धं स्वेदं च योजयेत् ।

### सर्वाङ्गसुन्दरी

विशेषादित्यादि ॥ अस्य यक्ष्मणः स्वरसादे विशेषेण नस्यधूमादि योजयेत् । तेषु च स्वरसादेषु मध्ये वातजे स्वरसादे कासमर्दादिस्वरसैः साधितमौत्तरभक्तिकं भक्तादूर्ध्वं घृतं पिबेत् । मार्कवो भृंगराजः । तच्च सर्पिः कासजित् स्वर्यं च स्यात् । उत्तरं भक्तादिति मयूरव्यंसकादित्वात् समासः । ततश्चाऽध्यात्मादित्वात् ठञ् । अथवा आर्तगळेन नीलपुष्पसहचरेण सिद्धं घृतमेवं पिबेत् । अथवा बदर्याः पत्रकल्कं घृतभृष्टं ससैन्धवमौत्तरभक्तिक योजयेत् । अथवा तैलं मधुकादिभिः पक्वं नस्तो निषेचयेदवसेचयेत् । क्रिमिनुद्विडङ्गम् । फलं मदनफलम् । हंसपादी कीटमारिका । नस्त इति नसूनासिकाया यत्तसूक्षुद्रेष्वित्यनेन तसि नसादेशः । तथा गुडौदनं सर्पिषा सह सुखोदकानुपानमश्नीयात् । पायसं चैव ससर्पिष्कं सुखोदकानुपानमद्यात् । स्वेदं च स्निग्धं योजयेत् ॥

### शशिलेखा

यत्किञ्चिद्राजयक्ष्मण्युक्तं तदेकादशस्वपि रोगेषु चिकित्सितं सामान्येनोक्तमेव यतोऽत उच्यते । विशेषादित्यादि सुबोधम् । "रुजाकरस्त्वार्तगळो हिन्तालो

भीषणाह्वयः"। आर्द्राणि बदरीपत्राणि पिष्टानि कल्को भवति। मधुकादिभिः पक्वं तैलं वा नावने शस्तमिति सुखोदकानुपानं ससर्पिष्कञ्च ॥

पित्तोद्भवे पिबेत्सर्पिः शृतशीतपयोनुपः ॥ ३९ ॥
क्षीरिवृक्षांकुरक्वाथकल्कसिद्धं समाक्षिकम्।
अश्नीयाच्च ससर्पिष्कं यष्टीमधुकपायसम् ॥ ४० ॥
बलाविदारिगन्धाभ्यां विदार्या मधुकेन च।
सिद्धं सलवणं सर्पिर्नस्यं स्वर्यमनुत्तमम् ॥ ४१ ॥
प्रपौण्डरीकं मधुकं पिप्पली बृहती बला।
साधितं क्षीरसर्पिश्च तत्स्वर्यं नावनं परम् ॥ ४२ ॥
लिह्यान्मधुरकाणां च चूर्णं मधुघृतान्वितम्।

सर्वाङ्गसुन्दरी

पित्तोद्भव इति ॥ पित्तोद्भवे सर्पिः समाक्षिकं पिबेत्। क्षीरिवृक्षांकुर-क्वाथकल्कसिद्धं शृतशीतक्षीरानुपानः। मधुयष्टिकान्वितं पायसञ्च ससर्पिष्कं भुञ्जीत। बलादिभिः सिद्धं सर्पिः ससैन्धवं परं स्वर्यं स्यान्नस्यम्। विदारिगन्धा सालपर्णी। प्रपौण्डरीकादिसाधितं क्षीरसमुद्भूतं सर्पिः श्रेष्ठन्नस्यम्। मधुरकाणाञ्च मधुरद्रव्याणां चूर्णं मधुघृतान्वितं लिह्यात् ॥

शशिलेखा

पित्तोद्भव इति ॥ स्वरसादे क्षीरिवृक्षाङ्कुरक्वाथकल्कसिद्धं समाक्षिकञ्च सर्पिः शृतशीतपयोनुपः पिबेदिति संबन्धः। सुबोधम्। क्षीरसर्पिरजातात् क्षीरात् कृतम्।

पिबेत् कटूनि मूत्रेण कफजे रूक्षभोजनः ॥ ४३ ॥
कट्फलामलकव्योषं लिह्यात्तैलमधुप्लुतम्।
व्योषक्षाराग्निचविकाभार्ङ्गीपथ्यामधूनि वा ॥ ४४ ॥
यवैर्यवागूं यमके कणाधात्रीकृतां पिबेत्।
भुक्त्वाद्यात् पिप्पलीं शुण्ठीं तीक्ष्णं वा वमनं भजेत् ॥ ४५ ॥
शर्कराक्षौद्रमिश्राणि शृतानि मधुरैः सह।
पिबेत् पयांसि यस्योच्चैर्वदतो विहतः स्वरः ॥ ४६ ॥

सर्वाङ्गसुन्दरी

**पिबेदिति ॥** कफोद्भवे स्वरसादे कटूनि कटुकरसानि द्रव्याणि मूत्रेण पिबेत्। रूक्षभोजनश्च स्यात्। तथा कट्फलादिकं तैलमधुप्लुतं लिह्यात्। व्योषादीनि वा एवं लिह्यात्। यवैरुपादानैर्यमके स्नेहद्वये कणाधात्रीकृतामेतत्-क्वाथसिद्धां यवागूं पिबेत्। तथा भुक्त्वा पिप्पलीं शुण्ठीं वाद्यात्। अथवा तीक्ष्णं वमनं भजेत्। यस्योच्चैर्भाषमाणस्य स्वरो विहतः स मधुरैः सह शृतानि शर्करामाक्षिकमिश्राणि पयांसि पिबेत् ॥

शशिलेखा

कफजे स्वरसादे कटूनि मरिचादीनि रूक्षभोजनः सन् मूत्रेण पिबेत्। व्योषादीनि वा लिह्यात्। यमकं घृततैले। भुक्त्वेति भोजनान्ते। यस्योच्चैर्भाषमाणस्य स्वरो विहतः स शर्करादिमिश्राणि पयांसि पिबेत् ॥

## अरोचकचिकित्सितम्

**विचित्रमन्नमरुचौ हितैरुपहितं हितम्।**
**बहिरन्तर्मृजा चित्तनिर्वाणं हृद्यमौषधम् ॥ ४७ ॥**
**द्वौ कालौ दन्तपवनं भक्षयेन्मुखधावनैः।**
**कषायैः क्षालयेदास्यं धूमं प्रायोगिकं पिबेत् ॥ ४८ ॥**
**तालीसचूर्णवटकाः सकर्पूरसितोपलाः।**
**शशाङ्ककिरणाख्याश्च भक्ष्या रुचिकराः परम् ॥ ४९ ॥**

सर्वाङ्गसुन्दरी

**विचित्रमित्यादि ॥** अरोचके विचित्रं नानाविधमन्नमपथ्यमपि हितं पथ्यम्। किंभूतम्। हितैः पथ्यैरुपहितं मिळितम्। एवमरुच्याख्यो व्याधिविशेषः सर्वव्याधिभ्यो गरीयान्। येनापथ्यमपि यदन्नं तदपि तस्मै देयं प्राणसन्धारणार्थम्। अन्नमेव हि प्राणिनां प्राणा इत्याहुः। एवं च सर्वव्याधिष्वरुचिरेव पूर्वं जेतव्या। ततो ज्वरादय इत्यर्थादुक्तं भवति। बहिर्मृजा बहिः शुद्धिः अभीक्ष्णं स्नानादिना बहिः परिमार्जनम्। अन्तर्मृजा अन्तः शुद्धिः। वमनादिना।

तथा चित्तनिर्वाणमरुचौ हितं हृद्यमौषधञ्च। तथा द्वौ कालौ सायंप्रातराख्यौ दन्तपवनं भक्षयेत्। तथा मुखधावनैः कषायैः आस्यं क्षाळयेत्। प्रायोगिकं स्नैहिकं धूमं पिबेत्। तथा तालीसचूर्णवटकाश्च तथा सकर्पूरशर्कराः शशाङ्क-किरणाख्याश्च भक्ष्याः परमतिशयेन रुचिकराः॥

शशिलेखा

विचित्रमित्यादिनाऽरोचकचिकित्सा। अपथ्यमपि प्रियं हितैर्मिश्रितं हितम्। बहिर्मृजा स्नानादिना। अन्तर्मृजा वमनविरचनेन। चित्तनिर्वाणमानुकूल्येनाभिलाषनिर्वर्तनम्। द्वौ कालौ प्रातर्भुक्त्वा च। मुखधावनाः कषाया मुखरोगेषु वक्ष्यन्ते॥

वातादरोचके तत्र पिबेच्चूर्णं प्रसन्नया।
हरेणुकृष्णाकृमिजिद्द्राक्षासैन्धवनागरात् ॥ ५० ॥
एलाभार्ङ्गीयवक्षारहिङ्गुयुक्ताद् घृतेन वा।
छर्दयेद्वा वचाम्भोभिः, पित्ताच्च गुळवारिभिः ॥ ५१ ॥
लिह्याद्वा शर्करासर्पिर्लवणोत्तममाक्षिकम्।
कफाद्वमेन्निम्बजलैर्दीप्यकारग्वधोदकम्। ॥ ५२ ॥
पानं समध्वरिष्टाश्च तीक्ष्णाः समधुमाधवाः।
पिबेच्चूर्णं च पूर्वोक्तं हरेण्वाद्युष्णवारिणा ॥ ५३ ॥

सर्वाङ्गसुन्दरी

**वातादित्यादि**॥ वातेनारुचौ सत्यां हरेण्वादिभ्यश्चूर्णं प्रसन्नया पिबेत्। एलाभार्ङ्गीत्यादियुक्ताद्धरेण्वादेश्चूर्णं घृतेन वा पिबेत्। वचाजलैर्वामयेद्वा। पित्तादरुचौ गुळवारिणा वमेत्। शर्करादिकं लिह्याद्वा। कफादरोचके निम्बजलैर्वमेत्। दीप्यकारग्वधोदकं पानं समधु। दीप्यकः कारवी। अरिष्टाश्च तीक्ष्णाः समार्द्वीकमाधवाः पानम्। हरेण्वादिचूर्णञ्च पूर्वोक्तमुष्णाम्बुना पिबेत्॥

शशिलेखा

हरेण्वादिकाद्धिङ्ग्वन्ताच्चूर्णं प्रसन्नया वा घृतेन वा वातजेऽरोचके पिबेत्। पित्तादरोचक इति सम्बन्धः। गुळवारिभिः छर्दयेदिति सम्बध्यते। लवणो-

त्तमं सैन्धवम् । कफादित्यादि सुबोधम् । समधुदीप्यकारग्वधोदकं पानम् । मधु मार्द्वीकम् । माधवं माक्षिकमद्यम् । हरेण्वादि पूर्वोक्तं हरेणुकृष्णादीति ॥

एलात्वङ्नागकुसुमतीक्ष्णकृष्णामहौषधम् ।
भागवृद्धं क्रमाच्चूर्णं निहन्ति समशर्करम् ॥ ५४ ॥
प्रसेकारुचिहृत्पार्श्वकासश्वासगळामयान् ।
यवानीतिन्त्रिणीकाम्लवेतसौषधडाडिमम् ॥ ५५ ॥
कृत्वा कोलञ्च कर्षांशं सितायाश्च चतुष्पलम् ।
धान्यसौवर्चलाजाजीवराङ्गं चार्धकार्षिकम् ॥ ५६ ॥
पिप्पलीनां शतं चैकं द्वे शते मरिचस्य च ।
चूर्णमेतत् पर रुच्यं ग्राहि हृद्यं निहन्ति[1] च ॥ ५७ ॥
विबन्धकासहृत्पार्श्वशूला[2]र्शोग्रहणीगदान् ।

सर्वाङ्गसुन्दरी

एलेत्यादि ॥ एलादिकं चूर्णं क्रमेण भागवृद्धं समशर्करं प्रसेकादीन् हन्ति । यवान्यादीनि कोलान्तानि प्रत्येकं कार्षिकाणि । शर्करायाः पलानि चत्वारि । धान्यकादिकमर्धकार्षिकम् । शतमेकं पिप्पलीनाम् । मरिचस्य द्वे शते । चूर्णमिदं परं रुच्यं तथा हृदयाय हितं ग्राहि विबन्धादीन् हन्ति ॥

शशिलेखा

एलादिकं क्रमात् भागवृद्धम् । तेन यत्रैलानां कर्षः तत्र त्वचो द्वौ कर्षौ । नागकेसरस्य त्रयः कर्षाः । मरिचस्य चत्वारः । पिप्पलीनां पञ्च । शुण्ठ्याः षडिति । सर्वेषां समा शर्करा पञ्च पलानि सकर्षाणि । यवान्यादिके पिप्पलीनां मरिचस्य च फलानि सङ्ख्यया ॥

तालीसपत्रं मरिचं नागरं पिप्पलीः शुभाः ॥ ५८ ॥
यथोत्तरं भागवृद्धास्त्वगेले चार्धभागिके ।
तद्रुच्यं दीपनं चूर्णं कणाष्टगुणशर्करम् ॥ ५९ ॥

1 "हिनस्ति च" इति पाठोऽपि दृश्यते । 2 "प्लीहा"शो इति सङ्कूहे ।

कासश्वासारुचिच्छर्दिप्लीहहृत्पार्श्वशूलजित् ।
पाण्डुज्वरातिसारघ्नं मूढवातानुलोमनम् ॥ ६० ॥

सर्वाङ्गसुन्दरी

तालीसेत्यादि ॥ तालीसपत्रादयो यथोत्तरमुत्तरोत्तरं भागवृद्धाः कार्याः । त्वक् च एला च एते अर्धभागप्रमाणे । एतच्चूर्णं पिप्पल्यष्टगुणशर्करं रुच्यं दीपनं कासादिजिच्च । पाण्ड्वादिघ्नं मूढवातानुलोमनञ्च ॥

शशिलेखा

तालीसादयो यथोत्तरं भागवृद्धाः । यो यस्मादुत्तरः स तस्मात् भागेन वृद्धः । तेन तालीसं कर्षं द्वौ कर्षौ मरिचस्य । त्रयः शुण्ठ्याः । चत्वारः पिप्पलीनाम् । त्वगेले प्रत्येकं भागार्धमाने । भागश्च नियामकस्तालीसस्य तेन त्वचोऽर्धकर्षः तद्वदेलानाम् । कणाभ्योऽष्टगुणा शर्करा द्वात्रिंशत् कर्षाः ॥

## प्रसेकचिकित्सितम्

अर्कामृताक्षारजले शर्वरीमुषितैर्यवैः ।
प्रसेके कल्पितान् सक्तून् भक्ष्यांश्चाद्याद्बली वमेत् ॥ ६१ ॥
कटुतिक्तैस्तथा शूल्यं भक्षयेज्जाङ्गलं पलम् ।
शुष्कांश्च भक्ष्यान् सुलघूश्चणकादिरसानुपः ॥ ६२ ॥
श्लेष्मणोऽतिप्रसेकेन वायुः श्लेष्माणमस्यति ।
कफप्रसेकं तं विद्यात् स्निग्धोष्णैरेव निर्जयेत् ॥ ६३ ॥

सर्वाङ्गसुन्दरी

अर्केत्यादि ॥ अर्कादिक्षारजले रात्रिस्थितैर्यवैः सक्तून् कल्पितान् भक्ष्यांश्च प्रसेकेऽद्यात् भक्षयेत् । बलवान् कटुतिक्तैर्वमेत् । तथा शूल्यं जाङ्गलं पलं मांसं शुष्कांश्च भक्ष्यान् भोज्यविशेषान् लघुतरान् भक्षयेत् । चणकादिरसमनु पश्चात् पिबेत् । वायुः श्लेष्माणं क्षिपति । श्लेष्मणः अतिप्रसेकेन हेतुभूतेन तं कफप्रसेकं विद्यात् स्निग्धोष्णैरेव निर्जयेत् ॥

शशिलेखा

अर्केत्यादिना प्रसेकचिकित्सा। अर्कस्यामृतायाश्च क्षारजल एकां निशां यवनां वासो द्वितीयेऽह्नि तैः सक्तवो भक्ष्या नानाविधाः। यस्तु बली स कटुभिस्तिक्तैश्चौषधैर्वमेत्। सुबोधम्। तमिति वातहेतुकम्॥

पीनसेऽपि क्रममिमं वमथौ च प्रयोजयेत्।
विशेषात् पीनसेऽभ्यङ्गान् स्नेहान् स्वेदांश्च शीलयेत्॥ ६४॥
स्निग्धानुत्कारिकापिण्डैः शिरःपार्श्वगळादिषु।
लवणाम्लकटूष्णांश्च रसान् स्नेहोपसंहितान्॥ ६५॥

सर्वाङ्गसुन्दरी

पीनस इति॥ इमं कफप्रसेकोक्तक्रियाक्रमं पीनसे वमथौ छर्द्यांच्च प्रयोजयेत्। विशेषेण पीनसेऽभ्यङ्गान् स्नेहान् स्वेदांश्च स्निग्धान् शीलयेत्। कैः? उत्कारिकापिण्डैः। केषु? शिरःपार्श्वगळादिषु। लवणादींश्च रसान् स्नेहान्वितान् शीलयेत्॥

शशिलेखा

इममिति प्रसेकोक्तम्। सुबोधम्। रसान् मांसरसान् लवणादिगुणान्। उपसहिताः सहिताः॥

शिरोंऽसपार्श्वशूलेषु यथादोषविधिं चरेत्।
औदकानूपपिशितैरुपनाहाः सुसंस्कृताः॥ ६६॥
तत्रेष्टाः सचतुःस्नेहाः दोषसंसर्ग इष्यते।
प्रलेपो नतयष्ट्याह्वशताह्वाकुष्ठचन्दनैः॥ ६७॥
बलारास्नातिलैस्तद्वत्ससर्पिर्मधुकोत्पलैः।
पुनर्नवाकृष्णगन्धाबलावीराविदारिभिः॥ ६८॥

सर्वाङ्गसुन्दरी

शिर इति॥ शिरोंऽसपार्श्वशूलेषु दोषानुसारेणोपक्रमेत्। तत्र तेषु औदकानूपमांसैश्चतुस्नेहयुताः सुसंस्कृता उपनाहा इष्टाः। दोषसंसर्गे च द्वन्द्वे तगरादिभिः प्रलेप इष्यते। तथैव बलादिभिर्घृतादियुतैः। तथैव पुनर्नवादिभिश्च॥

शशिलेखा

शिर:शूलादिषु य एव दोषोऽधिक: तमेव प्रतिकुर्यात्। औदकानां पृथक् ग्रहणं प्राधान्यात्। उपनाह: पिण्डबन्ध:। नतादिभिश्चन्दनान्तैर्लेप:। बलाद्यर्द्धश्लोकेनैको लेप:। पुनर्नवादिना द्वितीय:। संसर्गे विकल्प्य यथादोषं योज्य इति भाव: ॥

नावनं धूमपानानि स्नेहाश्चौत्तरभक्तिका:।
तैलान्यभ्यङ्गयोगीनि वस्तिकर्म तथा परम् ॥ ६९ ॥

शृङ्गाद्यैर्वा यथादोषं दुष्टमेषां हरेदसृक्।
प्रदेह: सघृतैश्चेष्ट: पद्मकोशीरचन्दनै: ॥ ७० ॥

दूर्वामधुकमञ्जिष्ठाकेसरैर्वा घृताप्लुतै:।
वटादिसिद्धतैलेन शतधौतेन सर्पिषा ॥ ७१ ॥

अभ्यङ्ग: पयसा, सेक: शस्तश्च मधुकाम्बुना।

सर्वाङ्गसुन्दरी

**नावनमित्यादि ॥** तथा नावनं नस्यं धूमपानानि चेष्यन्ते। तथा औत्तरभक्तिका: स्नेहाश्च। तथा तैलान्यभ्यङ्गयागीन्यभ्यङ्गयोगप्रशस्तानि तथा वस्तिकर्म प्राक्स्नेह इत्यादिकं परं श्रेष्ठम्। शृङ्गाद्यै: शृङ्गजलूकालाबुभिर्यथादोषं वातपित्तकफदुष्टं रक्तमेषां यक्ष्मिणां हरेत्। प्रलेप: पद्मकादिभि: सघृतैश्चेष्ट: दूर्वादिभिर्वा घृताप्लुतैरिष्ट:। वटादिना न्यग्रोधादिना सिद्धेन तैलेनाभ्यङ्ग: शस्त: शतधौतेन वा घृतेन। तथा क्षीरेण सेक: शस्त:। मधुयष्टिकाजलेन वा ॥

शशिलेखा

तथा शिर:प्रभृतिशूलेषु नावनादिकमिष्यते। अथवैषां शूलिनां शृङ्गाद्यैर्दुष्टमसृक् हरेत्। वातेऽधिके शृङ्गेण। पित्तेऽधिके जलौकाभि:। कफे तुम्बेनेति यथादोषार्थ:। पद्मकादिभि: सघृतैर्लेप: तथा दूर्वादिभि:। शतधौतमनेकशो विलाड्य शीतजलै: स्त्यानीकृतम्। क्षीरेण केवलेन सेक:। मधुकाम्बुना वा सेक: ॥

प्रायेणोपहताग्नित्वात् सपिच्छमतिसार्यते ॥ ७२ ॥
तस्यातिसारग्रहणीविहितं हितमौषधम्।

सर्वाङ्गसुन्दरी

**प्रायेण इति ॥** बाहुल्येनोपहताग्नित्वात् कारणात् पिच्छया सहातिसार्यते यक्ष्मी तस्यातिसारे ग्रहण्याञ्च यदुक्तमौषधं तद्धितम् ॥

शशिलेखा

सर्वराजयक्ष्मी सपिच्छं प्रायेणातिसार्यते उपहताग्नित्वाद्धेतोस्तत्रातिसारविहितं ग्रहणीविहितञ्च दोषाद्यपेक्ष्यौषधं हितम् ॥

**पुरीषं यत्नतो रक्षेच्छुष्यतो राजयक्ष्मिणः ॥ ७३ ॥**
**सर्वधातुक्षयार्त्तस्य बलं तस्य हि विड्बलम् ।**
**मांसमेवाश्नतो युक्त्या मार्द्वीकं पिबतोऽनु च ॥ ७४ ॥**
**अविधारितवेगस्य यक्ष्मा न लभतेऽन्तरम् ।**
**सुरां समण्डां मार्द्वीकमरिष्टान् सीधुमाधवान् ॥ ७५ ॥**
**यथार्हमनुपानार्थं पिबेन्मांसानि भक्षयन् ।**
**स्रोतोविबन्धमोक्षार्थं बलौजःपुष्टये च तत् ॥ ७६ ॥**

सर्वाङ्गसुन्दरी

**पुरीषमिति ॥** तथा राजयक्ष्मिणः शुष्यतः सतः पुरीषं यत्नेन रक्षेत् । किमित्याह । यस्मात्तस्य शोषिणः सर्वधातुक्षयार्तस्य सतो विड्बलमेव बलम् । न धात्वादिजं बलम् । मांसमेव युक्त्या देशकालसात्म्यादिलक्षणया भक्षयतो मार्द्वीकं च पश्चात् पिबतो वेगमधारयतो यक्ष्मा अन्तरमवकाशं न लभते । तथा सुरादीननुपानार्थं यथार्हं पिबेत् मांसानि भक्षयन् । तत्सुराद्यनुपानं मांसभक्षणञ्च स्रोतोविबन्धस्य मोक्षार्थं बलायौजसः पुष्टये च ॥

शशिलेखा

अस्य च राजयक्ष्मिणः शुष्यतः सतः पुरीषं यत्नतः क्षयाद्रक्षेत । यतः सर्वस्यापि देहे यत् बलं तद्धातुहेतुकं भवति । राजयक्ष्मिणः पुनः क्षीणसकलधातुत्वात् विड्बलमेव बलं तस्य नरस्य विडेव बलमित्यर्थः । अतस्तं रक्षेत् । सुबोधम् । तदित्यनन्तरोक्तं कर्म ॥

स्नेहक्षीराम्बुकोष्ठेषु स्वभ्यक्तमवगाहयेत् ।
उत्तीर्णं मिश्रकैः स्नेहैर्भूयोऽभ्यक्तं सुखैः करैः ॥ ७७ ॥
मृद्नीयात् सुखमासीनं सुखं चोद्वर्तयेत् परम् ।

### सर्वाङ्गसुन्दरी

स्नेह इति ॥ स्नेहादिकोष्ठेषु स्वभ्यक्तं सन्तमवगाहयेत् । ततः कोष्ठादुत्तीर्णं भूयः पुनर्मिश्रकैः स्नेहैर्गुल्मरोगाद्युक्तैरभ्यक्तं सुखैः सुखावहैः करैः सुखासीनं सुखेन तिष्ठन्तं मृद्नीयात् । परमतिशयेन सुखं यथा भवति तथा उद्वर्तयेत् ॥

### शशिलेखा

कोष्ठं काष्ठादिमयः स्नेहाद्याधारः । उत्तीर्णमवगाहात् फललाभेसति । पुनरभ्यक्तं सुखञ्चासीनं सुखैः करैः मृद्नीयात् ॥

जीवन्तीं[1] शतवीर्यां च विकसां सपुनर्नवाम् ॥ ७८ ॥
अश्वगन्धामपामार्गं तर्कारीं मधुकं बलाम् ।
विदारीं सर्षपान् कुष्ठं तण्डुलानतसीफलम् ॥ ७९ ॥
माषांस्तिलांश्च किण्वञ्च सर्वमेकत्र चूर्णयेत् ।
यवचूर्णं त्रिगुणितं दध्ना युक्तं समाक्षिकम् ॥ ८० ॥
एतदुद्वर्तनं कार्यं पुष्टिवर्णबलप्रदम् ।

### सर्वाङ्गसुन्दरी

जीवन्तीमित्यादि ॥ जीवन्त्यादिकं किण्वपर्यन्तं सर्वमेकत्र चूर्णयेत् । विकसा मञ्जिष्ठा । यवचूर्णं सर्वेभ्यस्त्रिगुणं दध्ना युक्तं समाक्षिकमेतदुद्वर्तनं कार्यं पुष्ट्यादिप्रदम् ॥

### शशिलेखा

जीवन्त्यादिकं सर्वमेकीकृत्य चूर्णयेत् । ततश्चूर्णात् त्रिगुणो यवचूर्णम् । एतद्दधिमाक्षिकाभ्यामुद्वर्तनम् ॥

---

1 ശതവീര്യാ=വയമ്പു. വികസാ=മഞ്ചട്ടി. തർക്കാരി=മുഞ്ഞവേര്. അതസീഫലം=കനലിയുടെകരു. (കാരാവിൻകരു) കിണ്വം=കള്ളിന്റെ ഊറൽ.

गौरसर्षपकल्केन स्नानीयौषधिभिश्च सः ॥ ८१ ॥
स्नायादृतुसुखैस्तोयैर्जीवनीयोपसाधितैः ।
गन्धमाल्यादिकां भूषामलक्ष्मीनाशनीं भजेत् ॥ ८२ ॥
सुहृदां दर्शनं गीतवादित्रोत्सवसंश्रुतिः ।
वस्तयः क्षीरसर्पींषि मद्यं मांसं सुशीलता ॥ ८३ ॥
दैवव्यपाश्रयं तत्तदथर्वोक्तं च पूजितम् ।

### सर्वाङ्गसुन्दरी

गौरसर्षप इत्यादि ॥ गौरसर्षपाणां कल्केन स्नानीयैः स्नानार्हैर्गन्धद्रव्यविशेषैरौषधिभिश्च सहदेवादिभिः ऋतौ हेमन्तादिके सुखावहैरुष्णादिभिस्तोयैर्जीवनीयद्रव्यशृतैः स्नायात् । तथा गन्धैश्चन्दनकुङ्कुमादिभिर्माल्यैः कुसुमैरादिशब्देनालङ्कारादिग्रहणं तैर्भूषामलक्ष्मीघ्नां सेवेत । तथा सुहृदां बन्धूनां दर्शनम् । गीतस्य वादित्राणामुत्सवस्य पुत्रजन्मविवाहादेः संश्रवणम् । तथा वस्तयः । क्षीराणां घृतानि क्षीरसर्पींषि । मद्यमांससुशीलता । तथा दैवव्यपाश्रयं मणिमङ्गलहोमप्रायश्चित्तादिकम् । तथा अथर्वोक्तमथर्ववेदविहितं यागादिकञ्च पूजितं प्रशस्तमेतदस्तेत्यर्थः ॥

### शशिलेखा

स चोद्वर्तितो गौरसर्षपकल्कादिभिः स्नायात् । स्नानीयानि स्नानेषूक्तान्यौषधानि । औषधयः सर्वौषधयः । ऋतुसुखानि जलानि शीतोष्णविशेषेण । भूषा अलङ्करणम् । सुबोधम् । दैवव्यपाश्रयं तत्तन्मणिमन्त्रादिकम् । अथर्वोक्तमथर्वणदृष्टं शान्तिकादि ॥

**इति राजयक्ष्मचिकित्सितं नाम पञ्चमोऽध्यायः ॥**

---

1 "मद्यमांससुशीलता" इत्यरुणदत्तस्य पाठः ।

# षष्ठोऽध्यायः

राजयक्ष्मचिकित्सितादनन्तरं छर्द्यादिचिकित्सितमारभ्यते। यतो यक्ष्मिण एव प्रायेणैत उपद्रवा जायन्ते। अत एतदारंभो युक्त इत्याह॥

अथाऽतश्छर्दिहृद्रोगतृष्णाचिकित्सितं नामाध्यायं व्याख्यास्यामः।
इति ह स्माहुरात्रेयादयो महर्षयः।

आमाशयोत्क्लेशभवाः प्रायश्छर्द्यो हितं ततः।
लङ्घनं प्रागृते वायोर्वमनं तत्र योजयेत् ॥ १ ॥
बलिनो बहुदोषस्य वमतः प्रततं बहु।
ततो विरेकं क्रमशो हृद्यं मद्यैः फलाम्बुभिः ॥ २ ॥
क्षीरैर्वा सह स ह्यूर्ध्वं गतं दोषं नयत्यधः।
शमनं चौषधं रूक्षदुर्बलस्य तदेव तु ॥ ३ ॥

सर्वाङ्गसुन्दरी

**आमाशय इत्यादि ॥** उत्क्लेशनमुत्क्लेशो दोषाणां स्वस्थानाचलनम्। आमाशयोत्क्लेशात् सम्भवो जन्म यासां ता आमाशयोत्क्लेशभवाः प्रायश्छर्द्यो यतस्ततस्तस्मात् प्राक् प्रथमं लङ्घनं हितम्। प्रायोग्रहणं वातजायां छर्द्यामामाशयोत्क्लेशाभवत्वाद्वायोर्ऋते तद्योजयेत्। कार्ये कारणोपचारादेवं निर्दिष्टम्। वातजां हि छर्दिं मुक्त्वाऽन्यासु छर्दिषु लङ्घनं कार्यम्। लङ्घने कृतेऽप्यनुपशान्तवेगासु तत्र तासु छर्दिषु बलिनः पुंसो न दुर्बलस्य तथा बहुदोषस्य तथा प्रततमनवरतं बहु वमतो वमनं योजयेत्। ततो वमनादनन्तरं विरेकौषधं क्रमशो न सहसा योजयेत्। किम्भूतं विरेकं? हृद्यं हृदयाय हितम्। कैः सह? मद्यैर्मार्द्वीकादिभिः। तथा फलाम्बुभिः शोधनद्राक्षादिफलनिष्पादितवारिभिः। अथवा क्षीरैर्गोक्षीरादिभिः सह। किमेवं स्यादित्याह। सह्यूर्ध्वमित्यादि। हि यस्मात्स विरेक ऊर्ध्वं गतं दोषं छर्द्यनुगमधो नयति। न केवलं शोधनं वमनं विरेचनं वा तत्र योजयेत्।

यावच्छमनमपि यदौषधं तदपि तत्र योजयेत्। रूक्षदुर्बलस्य पुनः पुंसस्तदेव शमनमेव योजयेत् शोधनानर्हत्वात् ॥

॥ शशिलेखा

सर्वासु छर्दिषु प्रथमं सर्वं लङ्घनमिष्यते। वायुप्रभवां छर्दिं वर्जयित्वा। यतः प्रायेण छर्दयः आमाशये यो दोषाणामुत्क्लेशस्तत्प्रभवाः। वमनं तत्रेत्यादिनाऽवस्थाविशेषेषु लङ्घनविशेषा उच्यन्ते। तत इति वमने योजिते। स हीति विरेकः। रूक्षदुर्बलस्य तदेव शमनमेव। न तु बलिनः उक्तं शोधनम्। बलवतस्तु सर्वम् ॥

परिशुष्कं प्रियं सात्म्यमन्नं लघु च शस्यते।
उपवासस्तथा यूषा रसाः काम्बलिकाः खलाः ॥ ४ ॥

शाकानि लेहाः भोज्यानि रागषाडवपानकाः।
भक्ष्याः शुष्का विचित्राश्च फलानि स्नानघर्षणम् ॥ ५ ॥

गन्धास्सुगन्धयो गन्धफलपुष्पान्नपानजाः।
भुक्तमात्रस्य सहसा मुखे शीताम्बुसेचनम् ॥ ६ ॥

सर्वाङ्गसुन्दरी

**परिशुष्कमित्यादि** ॥ तत्र सर्वास्वपि छर्दिषु परिशुष्कादिगुणयुक्तमन्नं शस्यते। तथोपवासादयश्च। काम्बलिकादिलक्षणं कृतान्नवर्गे कथितम्। तथा फलानि स्नानं घर्षणमुद्वर्तनादिरूपेण घर्षः। गन्धाः सुगन्धयः शोभना गन्धाः गन्धद्रव्यपुष्पफलान्नपानजाः शस्यन्ते। अत्र गन्धशब्देन गन्धद्रव्याणि। भुक्तमात्रस्य सहसा झटित्येवाज्ञातसंकेतस्य मुखे शीताम्बुसेचनमिति सामान्येन छर्दीनामुपक्रमाः ॥

शशिलेखा

परिशुष्कं द्रवरहितम्। यूषादीनां लक्षणं कृतान्न उक्तम्। घर्षणं येन चूर्णेनाङ्गमुत्घृष्यते। गन्धाः सुगन्धयः सुरभय एव गन्धादिजाः। गन्धशब्देन गन्धद्रव्याण्युच्यन्ते ॥

अधुना विशेषेणाह—

हन्ति मारुतजां छर्दिं सर्पिः पीतं ससैन्धवम् ।
किञ्चिदुष्णं विशेषेण सकासहृदयद्रवाम् ॥ ७ ॥

व्योषत्रिलवणाढ्यं वा सिद्धं वा डाडिमाम्बुना ।
सशुण्ठीदधिधान्येन[1] शृतं तुल्याम्बु वा पयः ॥ ८ ॥

व्यक्तसैन्धवसर्पिर्वा फलाम्लो वैष्किरो रसः ।
स्निग्धं च भोजनं शुण्ठीदधिडाडिमसाधितम् ॥ ९ ॥

कोष्णं सलवणं चात्र हितं स्नेहविरेचनम् ।

सर्वाङ्गसुन्दरी

हन्तीत्यादि—पवनजां छर्दिं सर्पिः पीतं सैन्धवान्वितं किञ्चिदुष्णं कासादिमतीं विशेषेण हन्ति। पीतं न तु लीढमशक्तत्वात्। तथा चोक्तम्। "आक्रामत्यनिलं पीत'मिति। तस्मात् पीतं घृतं छर्दिं हन्तीति युक्तम्। अथवा त्रिकटुत्रिलवणोत्कटं सर्पिः पीतं पूर्वोक्तगुणम्। डाडिमाम्बुना वा शुण्ठीदधिधान्येन सह सामान्यकल्पनया सिद्धं घृतं पीतं पूर्वोक्तगुणम्। जलतुल्यं वा पयः शृतं पूर्ववत्। अथवा वैष्किरो लावादिजो रसो बहुसर्पिस्ससैन्धवो मारुतजां छर्दिं हन्ति। किंभूतः? फलेन मातुलुङ्गादिनाम्लोऽम्लतां प्रापितः स्निग्धश्च भोजनमशनं शुण्ठीदधिडाडिमैः संस्कृतं वातजां छर्दिं हन्ति। अत्र मारुतच्छर्द्यां स्नेहेनैरण्डतैलादिना विरेचनं कोष्णं सलवणञ्च हितम्॥

शशिलेखा

वातजां छर्दिं ससैन्धवं सर्पिर्हन्ति। तद्धि सकासादिकां छर्दिं विशेषेण हन्ति। डाडिमक्वाथेन सशुण्ठ्यादिकेन सर्पिः। तुल्याम्बु वा पयः पीतं मारुतजां छर्दिं हन्ति। व्यक्तं प्रभूतं सैन्धवं सर्पिश्च यस्मिन्वैष्किरे रसे। कोष्णं सलवणञ्चेति भोजनविशेषणम्। अत्र च वातजायां छर्द्यां स्नेहविरेचनं हितम्॥

पित्तजायां विरेकार्थं द्राक्षेक्षुस्वरसैस्त्रिवृत् ॥ १० ॥
सर्पिर्वा तैल्वकं योज्यं वृद्धश्च श्लेष्मधामगम् ।

---

1 "सशुण्ठीदधिधान्येन पीतं तुल्याम्बु वा पयः" इतीन्दुः।

ऊर्ध्वमेव हरेत् पित्तं स्वादुतिक्तैर्विशुद्धिमान् ॥ ११ ॥

[1]पिबेन्मन्थं यवागूं वा लाजैः समधुशर्करम् ।
मुद्गजाङ्गलजैरद्याद्व्यञ्जनैः शालिषष्टिकम् ॥ १२ ॥

मृद्भृष्टलोष्टप्रभवं सुशीतं सलिलं पिबेत् ।
मुद्गोशीरकणाधान्यैः सह वा संस्थितं निशाम् ॥ १३ ॥

द्राक्षारसं रसं वेक्षोर्गुडूच्यम्बु पयोऽपि वा ।

सर्वाङ्गसुन्दरी

पित्ताजयामित्यादि ॥ पित्तजायां छर्द्यां विरेकार्थं विरेकप्रयोजनाय द्राक्षेक्षुस्वरसैस्त्रिवृद्देया । तैल्वकं वा सर्पिर्योज्यम् । पित्तजे छर्दिषि वृद्धं श्लेष्मधामगं पित्तमूर्ध्वमेव हरेत् । वमनं तत्र देयमित्यर्थः । कैर्द्रव्यैः ? स्वादुतिक्तैः । अनन्तरं विशुद्धिमान् कृतवमनविरेको लाजैर्मन्थं पिबेत् । किम्भूतं ? समधुशर्करम् अथवा यवागूं लाजैः समधुशर्करां पिबेत् । समधुशर्करश्च समधुशर्करा चेति पुमान् स्त्रियेत्येकशेषः । तथा मुद्गजाङ्गलजैश्च व्यञ्जनैःशालिषष्टिकमद्यात् । मृद्भृष्टलोष्टजं सुशीतं जलं पिबेत् । मुद्गादिभिः सह निशामवस्थितं जलं वा पिबेत् । द्राक्षारसादिं वा यथायोगं पिबेत् ॥

शशिलेखा

पित्तजायामित्यादि सुबोधम् । वृद्धं श्लेष्मस्थानाश्रितं पित्तं स्वादुभिस्तिक्तैश्चौषधैरूर्ध्वमेव हरेद्वामयेदेव । न तु विरेचयेत् । यश्चैवं विशुद्धः स तदहर्लाजैः समधुशर्करैर्मन्थं यवागूं वा पिबेत् । सुबोधम् । तप्तमृल्लोष्टैस्तापयित्वा शीतीकृतम् । मुद्गादिभिर्वा सह निशां स्थितं सलिलं द्वितीयेऽह्नि पेयम् ॥

जम्ब्वाम्रपल्लवोशीरवटशृङ्गावरोहजः ॥ १४ ॥

क्वाथः क्षौद्रयुतः पीतः शीतो वा विनियच्छति ।
छर्दिं ज्वरमतीसारं मूर्छां तृष्णाञ्च दुर्जयाम् ॥ १५ ॥

धात्रीरसेन वा शीतं पिबेन्मुद्गदलाम्बु वा ।

---

1 "समधुशर्करैः" इतीन्दुः ।

कोलमज्जासितालाजामक्षिकाविट्कणाञ्जनम् ॥ १६ ॥
लिह्यात् क्षौद्रेण पथ्यां वा द्राक्षां वा बदराणि वा ।

सर्वाङ्गसुन्दरी

**जम्ब्वाम्र इत्यादि** ॥ जम्ब्वाम्रपल्लवादिजः क्वाथः क्षौद्रान्वितः शीतः शीतकषायो वा क्षौद्रयुतः पीतश्छर्द्यादीन् हन्ति । मुद्गदलैः शृतमम्बु मुद्गदळाम्बु तद्धात्रीरसेन सह पिबेत् । अथवा मुद्गदळानामम्बु शीतं शीतकषायं वा पिबेत्। कोलादिकं क्षौद्रेण लिह्यात् । पथ्यां वा क्षौद्रेण लिह्यात् । द्राक्षां वा बदराणि वा लिह्यात् ॥

शशिलेखा

जम्बूपल्लवादिभिश्च क्वाथो वा शीतकषायो वा क्षौद्रान्वितः पीतः छर्द्यादीन्विनियच्छति नाशयति । सुबोधम् ॥

कफजायां वमेन्निम्बकृष्णापिण्डीतसर्षपैः ॥ १७ ॥
युक्तेन कोष्णतोयेन दुर्बलं चोपवासयेत् ।
आरग्वधादिनिर्यूहं शीतं क्षौद्रयुतं पिबेत् ॥ १८ ॥
मन्थान्यवैर्वा बहुशश्छर्दिघ्नौषधभावितैः ।
कफघ्नमन्नं हृद्यञ्च रागाः सार्जकभूस्तृणाः ॥ १९ ॥
लीढं मनःशिलाकृष्णामरिचं बीजपूरकात् ।
स्वरसेन कपित्थाच्च सक्षौद्रेण वमिं जयेत् ॥ २० ॥
खादेत् कपित्थं सव्योषं मधुना वा दुरालभाम् ।

सर्वाङ्गसुन्दरी

**कफजायामिति** ॥ कफजायां छर्द्याम् निम्बादियुक्तेन कोष्णजलेन वमेत् । दुर्बलञ्च नरमुपवासयेत् । आरग्वधादिनिर्यूहं शीतं क्षौद्रान्वितं पिबेत् । तथा बहून् वारांश्छर्दिघ्नौषधभावितैर्यवैर्मन्थान् पिबेत् । कफघ्नमन्नं हृद्यञ्च भुक्तं सद्वमिं जयेत् । रागाः सकुठेरकभूस्तृणा वमिं जयन्ति पीताः । मनश्शिलादिकं बीजपूररसेन सक्षौद्रेण लीढं वमिं जयेत् । कपित्थस्य वा रसेन माक्षिकान्वितेन मनश्शिलादिक

लीढं वमिं जयेत्। कपित्थं वा सत्रिकटुकं मधुना खादेत्। धन्वयासं वा मधुना खादेत् ॥

शशिलेखा

निम्बादिरसयुक्तेन कोष्णतोयेन कफजायां छर्द्यां वमेत्। दुर्बलस्योपवासो न वमनम्। आरग्वधादेर्निर्यूहः कषायः सुशीतः। तं क्षौद्रयुतं पिबेत्। छर्दिघ्नान्यौषधानि। लाजाम्लबदरडाडिमयवषष्टिकमातुलुङ्गसेव्यानि जम्ब्वाम्रपल्लवानि च वमिनिग्रहणानि मृत्स्ना चेति सङ्ग्रहोक्तानि। एषां क्वाथेन यवाः शुष्काः शुष्का भाव्यन्ते। तैः सक्तवः क्रियन्ते। आर्जकं कुठेरकम्। सूक्ष्मैः पत्रैर्भूस्तृणम्। मनश्शिलादिकं कपित्थबीजपूरस्वरसमाक्षिकैः त्र्यूषणेन सह कपित्थं खादेत्। दुरालभां वा मधुना ॥

अनुकूलोपचारेण याति द्विष्टार्थजा शमम्                    ॥ २१ ॥

क्रिमिजा क्रिमिहृद्रोगगदितैश्च भिषग्जितैः।
यथास्वं परिशेषाश्च तत्कृताश्च तथामयाः                    ॥ २२ ॥

सर्वाङ्गसुन्दरी

अनुकूल इत्यादि ॥ द्विष्टार्थजा छर्दिर्मनसोऽनुकूलोपचारेण शाम्यति। क्रिमिभ्यो जाता छर्दिः क्रिमिहृद्रोगगदितैरौषधैः शमं याति। न केवलं क्रिमिजा छर्दिरेवं शमं याति। परिशेषाश्चामयाः। तथा तत्कृताश्चामया ये तेऽपि यथास्वं गदितैर्भेषजैः शमं यान्ति ॥

शशिलेखा

परिशेषाः छर्दयः तृष्णामदौहृदजास्ता यथास्वं वाताद्यौषधेन च शमं यान्ति तत्कृतास्तृष्णाछर्द्यादिकृताश्चामयाः यथास्वमौषधैः शमं यान्ति ॥

छर्दिप्रसङ्गेन हि मातरिश्वा
धातुक्षयात् कोपमुपैत्यवश्यम्।
कुर्यादतोऽस्मिन् वमनातियोग-
प्रोक्तं विधिं स्तम्भनबृंहणीयम्                    ॥ २३ ॥

सर्पिर्गुडा मांसरसा घृतानि
कल्याणकत्र्यूषणजीवनानि ।
पयांसि पथ्योपहितानि लेहा
श्छर्दिं प्रसक्तां प्रशमं नयन्ति ॥ २४ ॥

सर्वाङ्गसुन्दरी

छर्दीत्यादि ॥ हि यस्माच्छर्देः प्रसङ्गेनानुबन्धेन यो धातुक्षयः तस्माद्धेतोर्मातरिश्वा अवश्यं कोपमायाति । अतो हेतोर्वमनातियोगप्रोक्तं विधिं स्तम्भनं बृंहणञ्च कुर्यान्न पुनस्तदुक्तमन्यं विधिम् । तन्त्रान्तरे चोऽक्तम् । "अञ्जनं चन्दनोशीरमजासृक् शर्करोदकम् । लाजचूर्णैः पिबेन्मन्थमतियोगहरं पर ॥" मिति । इन्द्रवज्रावृत्तम् । तथा सर्पिर्गुडादयो दोषदूष्यानुरोधतो यथाकालमुपयुक्ताश्छर्दिं प्रसक्तां शमयन्ति । उपजातिवृत्तम् ॥

शशिलेखा

गृहीतानुबन्धा छर्दिः कोष्ठाश्रयत्वाद्धृदयपीडाकरत्वाच्च द्राग्जेतव्येत्याह । छर्दिप्रसङ्गेनेत्यादि — छर्देः प्रसङ्गेनानुबन्धेन मातरिश्वा क्रुद्धः धातुक्षयाय भवति । तस्माद्धातुक्षयाच्च मातरिश्वा वायुरवश्यं नियतं कोपमुपैति । अतोऽस्माद्धेतुकदम्बकादस्मिन्नतिवमथौ वमनातियोगोक्तं विधिं क्रमं कुर्यात् प्रयोजयेत् । सर्पिर्गुडादयः प्रसक्तां गृहीतानुबन्धां छर्दिं प्रशमं नयन्ति ॥

## हृद्रोगचिकित्सितम्

छर्दिचिकित्सितानन्तरं हृद्रोगसाधनमुच्यते । हृद्रोगशब्दश्रवणसम्बन्धात् ।

हृद्रोगे वातजे तैलं मस्तुसौवीरतक्रवत् ।
पिबेत् सुखोष्णं सविडं गुल्मानाहार्तिजिच्च तत् ॥ २५ ॥
तैलञ्च लवणैस्सिद्धं समूत्राम्लं तथागुणम् ।

सर्वाङ्गसुन्दरी

**हृद्रोग इत्यादि** ॥ वातजे हृद्रोगे तैलं सुखोष्णं किञ्चिदुष्णं पिबेत्। किंभूतम् —मस्तुसौवीरतक्राणि विद्यन्ते यस्मिन् तदेवम्। तथा सविडं विडलवणेन सहितं तच्च गुल्मादिजित्। लवणैः सैन्धवादिभिः पञ्चभिर्गोमूत्रेण काञ्जिकेन च तैलं सामान्यपरिभाषया पक्कं तथागुणं गुल्मादिजित् ॥

शशिलेखा

हृद्रोग इत्यादिना हृद्रोगचिकित्सामाह। वातजे मस्त्वादियुक्तं तैलं पिबेत्। तच्च गुल्मादिजित् भवति। गोमूत्रेणाम्लेन च काञ्जिकादिना सर्वैश्च लवणैः पक्कं तैलञ्च पूर्वगुणम्। "पृथक् स्नेहसमं कुर्यात् पञ्चप्रभृति तु द्रवम्"इति स्मर्तव्यम् ॥

**बिल्वं रास्नां यवान् कोलं देवदारुं पुनर्नवाम् ॥ २६ ॥**

**कुलत्थान् पञ्चमूलञ्च पक्त्वा तस्मिन् पचेज्जले।**
**तैलं तन्नावने पाने वस्तौ च विनियोजयेत् ॥ २७ ॥**

सर्वाङ्गसुन्दरी

**बिल्वमित्यादि** ॥ बिल्वादीनि जले पक्त्वा तस्मिन् जले क्वाथीभूते तैलं पचेत्। तत्तैलं नस्ये पानेऽनुवासने च विनियोजयेत्। तच्च पूर्वसमम् ॥

शशिलेखा

बिल्वादीनां क्वाथे तैलचतुर्गुणे सिद्धं तैलं हृद्रोगवतो नावनादिषु प्रयोजयेत् ॥

**शुण्ठीवयस्थालवणकायस्थाहिङ्गुपौष्करैः।**
**पथ्यया च श्रृतं पार्श्वहृद्रुजागुल्मजिद्घृतम् ॥ २८ ॥**

**सौवर्चलस्य द्विपले पथ्यापञ्चाशदन्विते।**
**घृतस्य साधितः प्रस्थो हृद्रोगश्वासगुल्मजित् ॥ २९ ॥**

**डाडिमं कृष्णलवणं शुण्ठिहिङ्ग्वम्लवेतसम्।**
**अपतन्त्रकहृद्रोगश्वासघ्नं चूर्णमुत्तमम् ॥ ३० ॥**



सर्वाङ्गसुन्दरी

शुण्ठीत्यादि ॥ शुण्ठ्यादिभिः पक्वं घृतं पार्श्वहृद्रुजादिजित् । वयस्था आमलकम् । कायस्था काकोळी । सौवर्चलस्य पलद्वये पथ्यापञ्चाशद्युक्ते साधितः पक्वो घृतस्य प्रस्थः हृद्रोगादिजित् । डाडिमादिपञ्चकचूर्णमपतन्त्रकादिजित् ॥

शशिलेखा

शुण्ठ्यादीनां कल्केनानुक्तेनापि जलेन स्नेहसमेन[1] पक्वं घृतं पार्श्वहृद्रुजागुल्मजित् । सुबोधम् ॥

पुष्कराह्वशठीशुण्ठीबीजपूरजटाभयाः ।
पीताः कल्कीकृताः क्षारघृताम्ललवणैर्युताः ॥ ३१ ॥
विकर्तिकाशूलहराः, क्वाथः कोष्णश्च तद्गुणः ।
यवानीलवणक्षारवचाजाज्यौषधैः कृतः ॥ ३२ ॥
सपीतदारुबीजाह्वविजयाशठिपौष्करैः ।

सर्वाङ्गसुन्दरी

पुष्कराह्वेत्यादि ॥ पुष्कराह्वादयः कल्कीकृताः पिष्टास्तथा क्षारघृतादियुक्ताः पीता विकर्तिकाशूलहराः । विकर्तिका हृदयस्यैवान्तः छेदन इव रुग्विशेषः । हृद्रोगप्रसङ्गादेतच्चिकित्साप्युक्ता । क्वाथश्च कोष्णो यवान्यादिभिः पीतदार्वादिसहितैः कृतस्तद्गुणो विकर्तिकाशूलहरः । औषधं शुण्ठी । पीत दारु देवदारु । बीजाह्वं बीजकसारं बीजपूरकमित्यन्ये ॥

शशिलेखा

पुष्करमूलादीनां कल्कः क्षारादियुतो विकर्तिकाशूलहरः । विकर्तिका विकर्तनमिव जठरे । यवान्यादीनां पौष्करान्तानां क्वाथः कोष्णस्तद्गुणः ॥

---

1. चतुर्गुणेन जलेनेति वृद्धवैद्यव्यवहारः ।

ബീജപൂരം = വള്ളിനാരകയല്ലി. അജാജി = അയമോദകം ബീജാഹ്വം = വള്ളിനാരകം.

पञ्चकोलशठीपथ्यागुडबीजाह्वपौष्करम् ॥ ३३ ॥

वारुणीकल्कितं भृष्टं यमके लवणान्वितम् ।
हृत्पार्श्वयोनिशूलेषु खादेद्गुल्मोदरेषु च ॥ ३४ ॥

स्निग्धाश्चेह हिताः स्वेदाः संस्कृतानि घृतानि च ।
लघुना पञ्चमूलेन शुण्ठ्या वा साधितं जलम् ॥ ३५ ॥

वारुणीदधिमण्डं वा धान्याम्लं वा पिबेत्तृषि ।
सायामस्तम्भशूलामे हृदि मारुतदूषिते ॥ ३६ ॥

क्रियैषा सद्रवायामप्रमोहे तु हिता रसाः ।
स्नेहाढ्यास्तित्तिरिक्रौञ्चशिखिवर्तकदक्षजाः ॥ ३७ ॥

बलातैलं सहृद्रोगी पिबेद्वा सुकुमारकम् ।
यष्ट्याह्वशतपाकं वा महास्नेहं तथोत्तमम् ॥ ३८ ॥

रास्नाजीवकजीवन्तीबलाव्याघ्रीपुनर्नवैः ।
भार्ङ्गीस्थिरावचाव्योषैर्महास्नेहं विपाचयेत् ॥ ३९ ॥

दधिपादं तथाम्लैश्च लाभतः स निषेवितः ।
तर्पणो बृंहणो बल्यो वातहृद्रोगनाशनः ॥ ४० ॥

दीप्तेऽग्नौ सद्रवायामे हृद्रोगे वातिके हितम् ।
क्षीरं दधि गुडः सर्पिरौदकानूपमामिषम् ॥ ४१ ॥

एतान्येव च वर्ज्यानि हृद्रोगेषु चतुर्ष्वपि ।
शेषेषु स्तम्भजाड्यामसंयुक्तेऽपि च वातिके ॥ ४२ ॥

कफानुबन्धे तस्मिंस्तु रूक्षोष्णामाचरेत् क्रियाम् ।

सर्वाङ्गसुन्दरी

**पञ्चकोलेत्यादि** ॥ पञ्चकोलादिकं वारुण्या प्रसन्नया कल्कितं पिष्टं यमके भृष्टं सैन्धवयुतं हृदादिशूलेषु गुल्मादिषु च खादेत्। इह वातजे हृद्रोगे स्वेदाश्च स्निग्धाः हिताः। घृतानि च संस्कृतानि पक्वानि। तृषि सत्यां ह्रस्वेन पञ्चमूलेन शुण्ठ्या वा साधितं जलं पिबेत्। वारुणीमण्डं वा दधिमण्डं

वा पिबेत् काञ्जिकं वा। आयाम आक्षेपः सह आयामादिभिर्वर्तते यद्धृदयं तस्मिंस्तथाविधे हृदि तथा मारुतदूषिते सति क्रियैषा चिकित्सेयं पूर्वोक्ता। सद्रवायामप्रमोहे पुनः हृदि मारुतदूषिते रसास्तित्तिर्यादिजाः। स्नेहाढ्या बहुस्नेहा हिताः। सहृद्रोगी नरो बलातैलं बलाशतमित्यादिवातचिकित्सोक्तं पिबेत्। सुकुमारं वा वृद्धिचिकित्सोक्तम्। यष्ट्याह्वशतपाकं यष्ट्याह्वेन शतकृत्वः पक्वं तत्तैलं वातशोणितोक्तं पिबेत्। तथा तद्वदेव महास्नेहमुत्तमं पिबेत्। तदेवाह — रास्नेत्यादि। रास्नादिभिः कल्कीकृतैर्महास्नेहं दधिपादं विपाचयेत्। दधिपादं दध्नः पादश्चतुर्भागप्रमाणो यस्मिंस्तदेवम्। तथाम्लैः काञ्जिकादिभिर्लभतो यथालाभमनया कल्पनया सिद्धः स महास्नेहो निषेवितस्तर्पणो बृंहणो बल्यो वातहृद्रोगघ्नश्च स्यात्। दीप्तेऽग्नौ सति वातहृद्रोगे सद्रवायामे सह द्रवेण कम्पनेनायामेन च वर्तते यस्तस्मिंस्तथाभूते क्षीरादि हितम् औदकामिषं मत्स्यादिमांसम्। आनूपामिषं वराहादिमांसम्। वातहृद्रोगं मुक्त्वा अन्येषु शेषेषु चतुर्षु हृद्रोगेष्वेतानि क्षीरादीनि वर्ज्यानि न प्रयोज्यानि। न केवलमेष्वेवैतानि वर्ज्यानि, यावत् स्तम्भजाड्यामसंयुक्ते वातिकेऽपि हृद्रोगे एतानि वर्ज्यानि। तस्मिन् वातिके हृद्रोगे कफानुबन्धे सति रूक्षोष्णां क्रियां सेवेत॥

शशिलेखा

पञ्चकोलषडीत्यादि सुबोधम्॥

**पैत्ते द्राक्षेक्षुनिर्याससिताक्षौद्रपरूषकैः ॥ ४३ ॥**

**युक्तो विरेको हृद्यः स्यात् क्रमः शुद्धे च पित्तहा।**
**क्षतपित्तज्वरोक्तश्च बाह्यान्तः परिमार्जनम् ॥ ४४ ॥**
**कट्वीमधुककल्कश्च पिबेत् ससितमम्भसा।**

सर्वाङ्गसुन्दरी

**पैत्त इत्यादि॥** पैत्ते हृद्रोगे द्राक्षानिर्यासादिभिर्युक्तो विरेको हृद्यो हृद्रोगहरः स्यात्। शुद्धे सत्यनन्तरं क्रमः संसर्जनक्रमः पेयादिकः पित्तघ्नः कार्यः। क्षते पित्तज्वरे च या बहिरन्तश्च शुद्धिरुक्ता सा चात्र कार्या। कट्वीमधुककल्कं शर्करान्वितमम्भसा पिबेत्। कट्वी कटुकरोहणी॥

शशिलेखा

पैत्त इति। हृद्रोगे। विरेकः कल्पे वक्ष्यमाणो द्राक्षानिर्यासादिभिर्युक्तो हृद्यः स्यात्। क्षतोक्तं पित्तज्वरोक्तञ्च। बाह्यपरिमार्जनमभ्यङ्गादि। अन्तः शोधनं सुबोधम् ॥

श्रेयसीशर्कराद्राक्षाजीवकर्षभकोत्पलैः ॥ ४५ ॥

बलाखर्जूरकाकोलीमेदायुग्मैश्च साधितम्।
सक्षीरं माहिषं सर्पिः पित्तहृद्रोगनाशनम् ॥ ४६ ॥

प्रपौण्डरीकमधुकबिसग्रन्थिकशेरुकाः।
सशुण्ठीशैवलास्ताभिः सक्षीरं विपचेद्घृतम् ॥ ४७ ॥

शीतं समधु तच्चेष्टं स्वादुवर्गकृतञ्च यत्।
वस्तिश्च दद्यात् सक्षौद्रं तैलं मधुकसाधितम् ॥ ४८ ॥

सर्वाङ्गसुन्दरी

श्रेयसीत्यादि ॥ श्रेयस्यादिभिः साधितं सक्षीरं क्षीरान्वितं माहिषं सर्पिः पित्तहृद्रोगघ्नम्। श्रेयसी हस्तिपिप्पली। माहिषघृतस्यात्र निर्देशः शीततरत्वात्। प्रपौण्डरीकादिभिः क्षीरयुतं पक्वं घृतं शीतीभूतं सन्माक्षिकोपेतं तच्चेष्टमत्र रोगे। स्वादुवर्गेण द्राक्षादिना यच्च कृतं तच्च हितम्। तथा वस्तिमनुवासनं मधुकसाधितं मधुकेन पक्वं तैलं माक्षिकान्वितं दद्यात्॥

शशिलेखा

श्रेयस्यादिकल्कं सममाहिषक्षीरं माहिषं घृतं पित्तहृद्रोगनाशनम्। सुबोधम्। स्वादुवर्गो मधुरस्कन्धः। मधुयष्टीकल्कसाधितं सक्षौद्रं तैलं वस्तिः ॥

कफोद्भवे वमेत् स्विन्नः पिचुमन्दवचाम्बुना।
कुलत्थधन्वोत्थरसतीक्ष्णमद्ययवाशनः ॥ ४९ ॥

पिबेच्चूर्णं वचाहिङ्गुलवणद्वयनागरात्।
सैलायवानककणायवक्षारात् सुखाम्बुना ॥ ५० ॥

फलधान्याम्लकौलत्थयूषमूत्रासवैस्तथा।

पुष्कराह्वाभयाशुण्ठीशठीरास्नाकणावचात् ॥ ५१ ॥

काथं तथाऽभयाशुण्ठीमाद्रीपीतद्रुकट्फलात् ।
काथे रौहीतकाश्वत्थखदिरोदुम्बरार्जुने ॥ ५२ ॥

सपलाशवटे व्योषत्रिवृच्चूर्णान्विते कृतः ।
सुखोदकानुपानस्स्याल्लेहः कफविकारहा ॥ ५३ ॥

श्लेष्मगुल्मोदिताज्यानि क्षारांश्च विविधान् पिबेत् ।
प्रयोजयेच्छिलाह्वं वा ब्राह्मं चात्र रसायनम् ॥ ५४ ॥

तथाऽमलकलेहं वा प्राशं वाऽगस्त्यनिर्मितम् ।

सर्वाङ्गसुन्दरी

**कफोद्भव इति** ॥ कफोद्भवे हृद्रोगे स्विन्नो निम्बवचाभ्यां क्वथितेन जलेन वमेत्। कुलत्थजाङ्गलजरसादिभुक्। तथा चूर्णं वचादिभ्य उष्णोदकेन पिबेत्। यवानको यवानीभेदः। तथा फलधान्याम्लादिभिर्वैकतरेण पिबेत्। तथा पुष्कराह्वादेश्चूर्णं पूर्वोक्तैरुष्णाम्ब्वादिभिः पिबेत्। पुष्कराह्वं पुष्करमूलम्। तथा हरीतक्यादेः काथं पिबेत्। रौहीतकादीनां काथे त्रिकटुत्रिवृच्चूर्णयुते कृते। लेह उष्णोदकानुपानस्य सतः कफविकारहा स्यात्। अर्शश्चिकित्सितोक्तं तुलां दिव्येऽम्भसि पचेदिति प्रमाणानुसारेण परिमाणमत्र निरूप्यम्। श्लेष्मगुल्मे यान्युदितान्याज्यानि सर्पींषि तथा क्षारांश्च नानाप्रकारान् पिबेत्। अथवा शिलाजतुं प्रयोजयेत्। अथवा ब्राह्मं रसायनं रसायनाध्यायोक्तम्। तथाऽमलकलेहं वा रसायनोक्तं च्यवनप्राशम्। अथवा प्राशं लेहमगस्त्यनिर्मितं कासचिकित्सितोक्तं प्रयोजयेत् ॥

शशिलेखा

कफोद्भवे तु हृद्रोगे स्विन्नः सन् निम्बवचोदकेन वमेत्। कुलत्थरसादिभोजनः सन् वचादीनां चूर्णं सुखाम्बुफलधान्याम्लादीनामन्यतमेन पिबेत्। एकः पुष्करादीनां क्वाथः। द्वितीयोऽभयादीनाम्। माद्री अतिविषा। रौहीतकादीनां काथे त्रिकटुत्रिवृच्चूर्णान्विते कृतो लेहः सुखोदकानुपानस्य सतः श्लेष्मविकारहा। सुबोधम्। शिलाह्वब्राह्मरसायने रसायनविधौ वक्ष्येते। आमलकलेहश्च्यवनप्राशः। अगस्त्यनिर्मितं प्राशं कासचिकित्सितोक्तमगस्त्यरसायनम् ॥

स्याच्छूलं यस्य भुक्तेऽति जीर्यत्यल्पं जरां गते ॥ ५५ ॥

शाम्येत्सकुष्ठकृमिजिल्लवणद्वयतिल्वकैः ।
सदेवदार्वतिविषैश्चूर्णमुष्णाम्बुना पिबेत् ॥ ५६ ॥

यस्य जीर्णेऽधिकं स्नेहैः स विरेच्यः फलैः पुनः ।
जीर्यत्यन्ने तथामूलैस्तीक्ष्णैः शूले सदाधिके ॥ ५७ ॥

प्रायोऽनिलो रुद्धगतिः कुप्यत्यामाशये यतः ।
तस्यानुलोमनं कार्यं शुद्धिलङ्घनपाचनैः ॥ ५८ ॥

कृमिघ्नमौषधं सर्वं कृमिजे हृदयामये ।

सर्वाङ्गसुन्दरी

स्यादित्यादि ॥ यस्य पुंसो भुक्तेऽन्ने तत्काल एव अतिशूलं स्यात्, जीर्यत्यन्ने मध्यमायां पाकावस्थायामल्पं शूलं स्यात्, जरां गते किट्टसारतया परिणतेऽन्ने शाम्येन्, स नरः कुष्ठादिभिश्चूर्णमुष्णाम्बुना पिबेत् । यस्य पुंसो जीर्णेऽन्ने सत्यधिकं शूलं भवेत्, स स्नेहैर्विरेचनद्रव्यसिद्धैर्विरेचनीयः । जीर्यत्यन्ने पच्यमानावस्थायामधिके शूले सति फलैर्विरेचनफलैर्विरेच्यः । तथा च मुनिः । "मृद्वीकाथ विडङ्गानि खर्जूराणि परूषकम् । आरग्वधोऽथामलकं हरीतक्यो विभीतकम् ॥ कम्पिल्लकोऽपचिते च त्रपुसं च मकूलकम् । नीलिका कुवलं पीलु भवेत् फलविरेचनम्" इति । यस्य पुंसः सदाधिकमेव शूलं न केवलं भुक्तमात्रेऽन्ने जीर्णे जीर्यति वा, स पुरुषो मूलैस्तीक्ष्णैः सप्तलादिद्रव्यसम्बन्धिभिर्विरेच्यः । तथाचोक्तम्—"सप्तला शङ्खिनी दन्ती द्रवन्ती गिरिकर्णिका । त्रिवृच्छ्यामोदकीर्या च प्रकीर्या क्षीरिणी तथा ॥ छगलाण्डी गवाक्षी च क्लीवाक्षी गिरिकर्णिका । मसूरविदला चैव भवेन्मूलविरेचनम् ॥" इति । प्रायो बाहुल्येन मारुतो रुद्धगतिः रुद्धमार्गः आमाशयं गतः कुप्यति । तस्य मरुतः शुध्यादिभिरवस्थावशाद्व्यस्तैः समस्तैर्वाऽनुलोमनं कार्यम् । कृमिजे हृद्रोगे सर्वमेव कृमिघ्नमौषधं कार्यम् ॥

शशिलेखा

यस्य भुक्तेऽति शूलं जीर्यत्यन्ने मन्दीभवति जरां गते शाम्यति, स पुरुषः कुष्ठादिभिश्चूर्णमुष्णाम्बुना पिबेत् । यस्य जीर्णे शूलमधिकं सः स्नेहैरेरण्डादिजैः

जीर्यत्यन्नेऽधिके शूले फलैर्हरीतक्यादिभिर्विरेच्यः। सदाधिके शूले तीक्ष्णैर्मूलैर्विरेच्य. ॥

## तृष्णाचिकित्सितम्

तृष्णासु वातपित्तघ्नो विधिः प्रायेण शस्यते ॥ ५९ ॥

सर्वासु शीतो बाह्यान्तस्तथा शमनशोधनम्।
दिव्याम्बु शीतं सक्षौद्रं तद्वद्भौमश्च तद्गुणम् ॥ ६० ॥

निर्वापितं तप्तलोष्टकपालसिकतादिभिः।
सशर्करं वा क्वथितं पञ्चमूलेन वा जलम् ॥ ६१ ॥

दर्भपूर्वेण मन्थश्च प्रशस्तो लाजसक्तुभिः।
वाट्यश्चामयवैः शीतः शर्करामाक्षिकान्वितः ॥ ६२ ॥

यवागूः शालिभिस्तद्वत् कोद्रवैश्च चिरन्तनैः।
शीतेन शीतवीर्यैश्च द्रव्यैः सिद्धेन भोजनम् ॥ ६३ ॥

हिमाम्बुपरिषिक्तस्य पयसा ससितामधु।
रसैश्चानम्ललवणैर्जाङ्गलैर्घृतभर्जितैः ॥ ६४ ॥

मुद्गादीनां तथा यूषैर्जीवनीयरसान्वितैः।
नस्यं क्षीरघृतं सिद्धं शीतैरिक्षोस्तथा रसे ॥ ६५ ॥

निर्वापणाश्च गण्डूषाः सूत्रस्थानोदिता हिताः।
दाहज्वरोक्ता लेपाद्या निरीहत्वं मनोरतिः ॥ ६६ ॥

महासरिद्ध्रदादीनां दर्शनस्मरणानि च।

### सर्वाङ्गसुन्दरी

**तृष्णास्वित्यादि** ॥ तृष्णासु सर्वासु वातपित्तहरः सर्वो विधिः प्रायेणेष्यते। . तथा बाह्येऽन्तरे च शीतो विधिस्तथा शमनं शोधनं च शस्येते। दिव्याम्बु आन्तरिक्षं जलं शीतं माक्षिकेण सह शस्यते। भौमश्च जलं तद्गुणं दिव्याम्बुसमानगुणं "शुचिपृथ्वसितश्वेते देश" इत्यादिलक्षणलक्षितं तच्च तद्वच्छीतं

क्षौद्रयुक्तं शस्यते। तस्य दिव्यजलस्येव गुणा यस्य तत्तद्गुणम्। तथा तप्त-लोष्टकपालसिकतादिभिस्तप्तं सन्निर्वापितं शीतीकृतं जलञ्च शस्यते। अथवा तदेव सशर्करं शस्यते। अथवा तत् दर्भपूर्वेण तृणाख्येन पञ्चमूलेन क्वथितं जलं निर्वापितं शस्यते। तथा लाजसक्तुभिः कृतो मन्थः प्रशस्तः। तथा आमैरभृष्टैर्यवैर्वाट्य प्रशस्तः शीतीभूतः शर्करामाक्षिकयुक्तश्च। यवागूः शालिभिस्तथैव शर्करामाक्षिकान्विता शस्ता। तथा चिरन्तनैः कोद्रवैः शर्करा-मधुयुक्ता यवागूः शस्ता। तथा शीतेन शीतीकृतेन द्रव्येण शीतवीर्यैर्द्रव्यैः सिद्धेन पयसा भोजनं हितम्। तथा शीतजलपरिषिक्तस्य पुंसः पयसा सशर्करा-माक्षिकं भोजनं हितम्। तथा न केवलं पयसा भोजनं सात्म्यादिवशान्मांस-रसैर्जाङ्गलैः च। किंभूतैः—किञ्चिदम्ललवणैर्घृतभर्जितं भोजनं हितम्। तथा मुद्ग-मसूरादीनां यूषैः जीवनीयरसयुतैर्भोजनं हितम्। तथा शीतैः शीतवीर्यैश्चन्दनादि-भिरिक्षुरसे सिद्धं पक्वं क्षीरघृतं नस्यं हितम्। क्षीरोद्भवं घृतं क्षीरघृतम्। तथा सूत्रस्थानोदिता निर्वापणा रोपणा गण्डूषाश्च हिताः। तथा दाहज्वरे य उक्ता लेपाद्या "दूर्वादिभिर्वा पित्तघ्नै"रित्यादिग्रन्थनिर्दिष्टास्तेऽपि हिताः। तथा निरीहत्वं निर्व्यापारत्वं हितम्। तथा मनसो रतिर्निर्वृतत्वम्। तथा महासरितां महाह्रदानां महतां तटाकादीनां दर्शनस्मरणानि च हितानि। इति तृष्णासु सामान्येन चिकित्सितमुक्तम्॥

**शशिलेखा**

तृष्णास्वित्यादि सुबोधम्। तप्तलोष्टादिभिर्निर्वापितं यत्र ते मग्नाः। दर्भपूर्वेण पञ्चमूलेन क्वथितं सशर्करम्। वाट्यो यवौदनः। शीतेनेत्यादि पयसो विशेषणम्। हिमाम्बुपरिषिक्तस्य पुरुषस्य ससितामधु भोजनम्। शीतैरौषधैः सिद्धं क्षीरोद्भवं घृतं नस्यम्। इक्षुरसः केवल एव। निर्वापणाः संशमनाः। ज्वरघ्ना लेपसेकादयः। निरीहत्वमास्यासुखम्। सुबोधम्॥

विशेषेणाह—

तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ॥ ६७ ॥
रसाश्च बृंहणाः शीता विदार्यादिगणाम्बु च।
पित्तजायां सितायुक्तः पक्वोदुम्बरजो रसः ॥ ६८ ॥

वातप्रकृतिनोष्णो मण्ड: पेय: । कफप्रकृतिना वातकफप्रकृतिना चोष्णो मण्ड: पेय: । वातपित्तप्रकृतिना पित्तश्लेष्मप्रकृतिना पित्तप्रकृतिना च हिमो मन्थ: पेय: । एवं कालसात्म्यादिषु निरूप्यम्। "सक्तव: सर्पिषाभ्यक्ता: शीतोदकपरिप्लुता: । नातिद्रवो नातिसान्द्रो मन्थ इत्यभिधीयते ॥" श्रमात्तृषि जातायां मांसरसं मन्थं वा सशर्करं पिबेत् । आतपात्तृषि यवकोलोद्भवै: सक्तुभि: सशर्करं मन्थं पिबेत् । सर्वाणि चाङ्गानि तिलपिण्याककाञ्जिकैर्लिम्पेत् । शीतस्नानात्तृषि तृड्वान् मद्याम्बु पिबेत् । गुडजलं वा । मद्यात्तृड्वानर्धजलं मद्यं स्नातोऽम्ललवणाभ्यां युतं पिबेत् ॥

शशिलेखा

सर्वै: सन्निपातेन आमाच्च या तृष्णा तस्यां तद्धन्त्री सन्निपातघ्न्यामघ्नी च क्रिया हिता । व्यूषणादियुक्तेन फलाम्लाद्यन्यतमेन वमनम् । अन्नात्ययादन्नस्यालाभात् । कालविदिति ग्रीष्मादिके पित्तकफादिके वा । सर्वं पञ्चम्यन्तम् ॥ तत्र हेतुर्विज्ञेय: सुबोधम् ॥

स्नेहात्तीक्ष्णतराग्निस्तु स्वभावशिशिरं जलम् ॥ ७८ ॥
स्नेहादुष्णाम्ब्वजीर्णात्तु जीर्णान्मण्डं पिपासित: ।
पिबेत्स्निग्धान्नतृषितो हिमस्पर्धि गुडोदकम् ॥ ७९ ॥
गुर्वाद्यन्नेन तृषित: पीत्वोष्णाम्बु तदुल्लिखेत् ।
क्षयजायां क्षयहितं सर्वं बृंहणमौषधम् ॥ ८० ॥
कृशदुर्बलरूक्षाणां क्षीरं छागो रसोऽथवा ।
क्षीरञ्च सोर्ध्ववातायां क्षयकासहरै: शृतम् ॥ ८१ ॥

सर्वाङ्गसुन्दरी

**स्नेह इत्यादि** ॥ स्नेहेन तीक्ष्णतरोऽग्निर्यस्य स नरस्तृड्वान् निसर्गशीतळं जलं पिबेत् । स्नेहात् पुनरजीर्णात् पिपासित उष्णाम्बु पिबेत् । जीर्णात्तु स्नेहात् पिपासित: मण्डं पिबेत् ॥ स्निग्धान्नेन भुक्तेन तृषितो हिमस्पर्धितुहिनशीतळं गुडोदकं पिबेत् । गुर्वाद्यन्नेन भुक्तेन तृषित: पीत्वोष्णाम्बु तत गुर्वाद्यन्नमुद्वमेत् । क्षयजायां तृषि क्षयहितं यद्बृंहणमौषधं तत्सर्वं शस्तम् । कृशादीनां तृषि क्षीरं हितमथवा छागरसो हित: । सोर्ध्ववातायां तृषि

क्षयकासहरैः शृतं क्षीरं हितम्। चशब्दान्मांसरसश्च ॥

शशिलेखा

स्नेहेत्यादिना स्नेहादिसंस्कृतस्य तृष्युक्तम्। अजीर्णात् स्नेहात् पिपासित उष्णाम्बु पिबेत्। जीर्णान्मण्डम्। स्निग्धान्नं मांसान्नक्षीरपेयादि। तदिति गुर्वाद्यन्नम्। उल्लिखेदुद्वमेत् ॥

**रोगोपसर्गजातायां धान्याम्बु ससितामधु।**
**पाने प्रशस्तं सर्वा च क्रिया रोगाद्यपेक्षया ॥ ८२ ॥**

**तृष्णक् पूर्वामयक्षीणो न लभेत जलं यदि।**
**मरणं दीर्घरोगं वा प्राप्नुयात् त्वरितं ततः ॥ ८३ ॥**

**सात्म्यान्नपानभैषज्यैस्तृष्णां तस्य जयेत् पुरः।**
**तस्यां जितायामन्योपि शक्यो व्याधिश्चिकित्सितुम् ॥ ८४ ॥**

सर्वाङ्गसुन्दरी

**रोगोपसर्गेत्यादि ॥** रोगोपसर्गजातायां तृषि धान्याम्बु ससितामाक्षिकं पाने प्रशस्तम्। सर्वाश्चं क्रिया रोगाद्यपेक्षया शस्ताः। पूर्वामयेन क्षीणः सन् तृष्णक् पिपासितो यदि जलं न लभेत तदा मरणं दीर्घरोगं वा प्राप्नुयाद्यतस्ततो हेतोस्त्वरितं शीघ्रतरं तस्य नरस्य पूर्वमन्येभ्यो रोगेभ्यः सात्म्यान्नपानभैषज्यैस्तृषं जयेत्। ततोऽपरं रोगम्। किमेवं क्रियत इत्याह--- तस्यां तृषि जितायां सत्यामन्योऽपि रोग उपक्रमिंतु शक्यः स्यात् ॥

शशिलेखा

रोगोपसर्गजातायां तृषि धान्याम्बु ससितामधु प्रशस्तम्। तत्र ह्युपसर्गजातायां तृष्णगतितृट् सन् पूर्वामयेन क्षीणो यदुपसर्गात्तृडुत्पन्ना स यदि जलं न प्राप्नुयात् अवश्यं मरणं दीर्घरोगं वाप्नुयात्। अतस्तस्य तां तृषं शीघ्रमेव सात्म्यैरन्नपानादिभिर्जयेत्। सुबोधम् ॥

इति षष्ठोऽध्यायः।

---




